॥ अर्हम् ॥

महामहोपाध्यायसाधुराजगणिकृता

भोज्यादिनामगर्भिता

# स्वोपज्ञटीकासहिता जिनस्तुतिः ।

श्रीमहावीरमानम्य किञ्चिद् वृत्तिर्विधीयते ।
स्वोपज्ञचित्रकृत्स्तोत्रे क्रीडामात्राय धीमताम् ॥ १ ॥

तस्य चेदमादिपद्यं आंबा ॥१॥ अत्र स्तुतौ सन्तोऽप्यनुस्वारा अर्थानुकूल्यान्न गण्यन्ते लकारस्थाने डकारा डकारस्थाने च लकारास्तथा बकारस्थाने वकारा वकारस्थाने च बकारा अर्थानुकूल्यादेव गण्यन्ते चित्रकृतश्लिष्टकाव्यत्वात् । उक्तं च ।

यमकश्लेषचित्रेषु बवयोर्डलयोर्न भित् ।
नानुस्वारविसर्गौ च चित्रभङ्गाय सम्मतौ ॥१॥

॥ श्रीसर्वविदे नमः ॥

**आम्बारायण सेलडी खडहडीकेलामती**

**रांगभं चंचद्दाडिमद्राखखारिक रसात्त्वां सा-
कुची खाजलाम् । लाडूषांडखजूरसारखड-
बूजांकूरदालिप्रभो नौमि श्रीजिनमुद्रसाक-
रमहं श्रीपानसत्फोफलम् ॥ १ ॥**

[ आम्ब ! अरायण ! सेलडी खलहलीकेलामतिः राङ्गभं चञ्चद्दालिमद्र! अखखारिक! रसात्त्वां साकुची खाजडाम्!। लालूषाण्डख ! जूरासारखलब् ! ऊजाङ्कूरदालिप्रभो ! नौमि श्रीजिन ! मुद्रसाकरमहं श्रीपानसत्फोऽफलम्॥१॥]

अस्य व्याख्या ॥ हे श्रीजिन ! श्रीवीतराग रसात् "गम्ययपः कर्माधारे"॥२।२।७४॥ इति पञ्चमी विभक्तिरसमासे चेत्यर्थः॥ त्वां भवन्तमहं नौमि स्तौमीति संटङ्कः॥ हे आम्ब ! आम्बादीनि पदानि श्रीजिनरूपमुख्यामन्त्रणविशेषणानि । अबुङ् रबुङ् शब्द इत्यस्य धातोरबनं अम्बः भावे घञ्, शब्दो वाणीति यावत् । तत आ समन्तात् विश्वव्यापी अम्बः शब्दो यस्य स तथा, विश्वव्यापित्वं च भगवद्वाण्या घटत एवार्थतो भगवता प्रणीतस्य द्वादशा-

ङ्गस्य विश्वव्यापित्वात् तस्यामन्त्रणम्। तथा हे अरायण ! कैं गैं रैं शब्द इति धातोः रायतेऽनेनेति बाहुलकात्करणे घञि, रायो वचनम्, न विद्यते रायो वचनं "णः प्रकटे निष्फले च प्रस्तुते ज्ञानबन्धयोरिति" निघण्टुवचनात् णश्च बन्धो यस्य सोऽरायणः तस्यामन्त्रणं उपलक्षणत्वाद्वचनाभावेन मनःकाययोरप्यभावो गम्यते। परमात्मस्तुतिहेतोर्वा मध्यग्रहणे आद्यन्तयोरपि ग्रहणमिति न्यायाद्वा ततोऽयोगिगुणस्थानावस्थायामविद्यमानमनोवचनकायकर्मबन्धेत्यर्थः। अहं कथं भूतः सेलडी इः कामे इत्येकाक्षरनाममालावचनात् इः कामस्ततः सह इना वर्त्तते या सा सेः, सकामा योषिदित्यर्थः, तस्यां लडन्ति स्वेच्छया विलसन्तीति सेलडीनि इन्द्रियाणि सेलडं मनो वा निन्दितानि तानि तद्वा विद्यन्तेऽस्य असौ सेलडी निन्दायां मत्वर्थी इन्।

तथा चाहुर्वैयाकरणमिश्राः।

भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायिने।

संसर्गेऽस्ति विवक्षायां प्रायो मत्वादयो मताः ॥१॥ इति

उन्मार्गप्रवर्त्तकेन्द्रियमनःपरतन्त्र इत्यर्थः। अहं पुनः कथं भूतः खलहलीकेलामतिः खलाः कर्णेजपा हलिनश्च कृषीबलास्तेषां ईं लक्ष्मीं शोभामित्यर्थः, कायति स्वस्मिन्निवासायाऽऽह्वयति.कैं धातोः "आतोडोऽह्वा"-५।१।७६॥ इति डप्रत्यये खलहलीकः दुर्जनवदसद्वाक्यः कृषीबलवन्निः श्रीकश्चेत्यर्थः ईडिक् स्तुतावित्यस्माद्धातोः "क्तेटो गुरोर्व्यञ्जनात्" ॥ ५ । ३ । १०६ ॥ इति अप्रत्यये ईडा स्तुतिः तत्र मतिरभिप्रायो यस्य स तथा वैयधिकरण्येऽपि गमकत्वादुष्ट्रमुखादित्वात् समासः । एवमन्यत्रापि ज्ञेयम् । ततश्च खलहलीकश्चासौ ईडामतिश्चेति विशेषणकर्मधारयः । त्वां पुनः कथं भूतं राङ्गभं रः कामे इति वचनात् रो मन्मथः स च्च कवि समये सुरूपो वर्ण्यते। अङ्गं वपुः तस्य भा दीप्तिरङ्गभारस्येव अंगभा यस्य स तथा तं, स्मरवत् सुभगिमलवणिमाञ्चितामित्यर्थः। पुनरप्यामन्त्रयते, हे चञ्चद्दाडिमद्र!

दो दाने इत्येकाक्षरनिघण्टुवचनात् वा दाः दानानि तेषामालयः श्रेणयो भद्राणि च मङ्गलानि ततस्तत्पुरुष-गर्भे द्वन्द्वे दालिभद्राणि यस्य स तथा चञ्चन्ति उल्ल-सन्ति दालिभद्राणि यस्य स तथा तस्य संबोधनं, तथा हे अखखारिक! खमिन्द्रियं स्वर्गशून्यभूपाकाशसुखेषु चेति वचनात् प्रथमखशब्दः सुखार्थः द्वितीयास्त्विन्द्रि-यार्थः ततो न विद्यते खं सुख येषां तेऽखाः खानि इन्द्रियाण्येवारयः खारयः अखाः खारयो यस्य स समा-सान्ते काचि अखखारिकः दान्तेन्द्रियशत्रुरित्यर्थः तस्या मन्त्रणं, पुनरहं कथं भूतः साकुची कुचौ स्तनौ तद्धार-णया लक्षणया हृदयमपि तथा ततश्च न विद्यते कुचौ येषां तेऽकुचा असद्हृदया मूर्खा इत्यर्थः सहाकुचै-र्विद्यते यः स साकुचः मूर्खाचारो मूर्खवाग्विलासो ज्ञानाभावो वाऽन्यो वा यः कश्चिन्मूर्खगुणः स विद्यते ऽस्मिन्निति साकुची। तथा हे खाजलाम्! खमाकाशं अजडाश्च ज्ञानमयत्वेनात्मान उपलक्षणत्वाद्धर्माधर्मका-

लपुद्गला अपि तान् अमति गच्छति "सर्वे गत्यर्था ज्ञाना-र्था" इति न्यायाज्जानाति "मन्वन्क्वनिप्विच्क्वचित्"॥५।१।१४७॥ इति विचि खाजलाम् तस्य सम्बोधनं। यद्वा खा भूपा अजडाश्च विद्वांसस्तेषु अमति गच्छति आराध्यतये-ति खाजलाम्। अथवा खं शून्यवादस्तस्याजः क्षेपस्तल्ला-तीति डे, खाजलं अमति जानातीति अम् विच्। ज्ञान-मित्यर्थः। ततः खाजलं अम् ज्ञानं यस्य स तथा तस्य सम्बोधनम्। तथा हे लालूषाण्डख ! ला आदान इत्येकाक्ष-रनिघण्टुवचनाल्ला आदानं, आदानं च क्रियारूपम्, क्रिया च तदनुकूलाभिप्रायाविनाभूता, ततश्च ला इति कोऽर्थः लोभः लूश्च च्छेदनं हिंसेत्यर्थः, तावेव उषा रजनी तस्यां अण्डमिव अण्डं वृत्तः परिपूर्णश्चेत्यर्थः, खश्च भास्करे इति वचनात् खः सूर्यः ततश्च अण्डं चासौ खश्च अण्ड-खः ततः सप्तमीतत्पुरुषः। सूर्यस्याण्डोपमया उपरागाद्युप-प्लुतत्वाभावो गम्यते तत आमन्त्रणं हे लालूषाण्डख। तथा हे जूरसारखडब् ! जूरैचँ जरायामिति धातोर्घञि

जूरो जरा, सृँगताविति धातोः सारणं गमनं भवान्तर इति भावे घञि सारः, ताभ्यां चाविनाभूतत्वेन जन्मा-प्याक्षिप्यते ततश्च जूरसारौ खलति खलसञ्चये चेति धातोः सञ्चयार्थत्वात्सञ्चिनोतीति जूरसारखल् संसारः, क्विप् तस्मादवति रक्षति जूरसारखलब्, विच्प्रत्ययः क्विपि तु ऊरिति स्यात् तस्यामन्त्रणे॥ तथा हे ऊजाङ्कु-रदालिप्रभो ! इच्छार्थस्यावतेरवनं ऊः क्विप् इच्छा तस्याः सकाशाज्जायते स्मेति ऊजः सङ्कल्पयोनिः स्मर-स्तस्य येऽङ्कुरा अभिलाषविशेषास्तेषां दलण् विदारणे इत्यस्मात् "इकिश्तिव्स्वरूपार्थे"॥५।३।१३८॥ इति सूत्रेण धात्वर्थे इप्रत्यये दालिर्विदारणं तत्र प्रभुः समर्थस्तस्याम-न्त्रणा।त्वां पुनः कथं भूतं मुद्रसाकरं।मुद् हर्षः स एव रसस्तस्याकर इवाकरः खानितुल्यः तं यथाऽऽकराद्रसादि-वस्तु सञ्जायते तथाऽऽनन्दरसः सर्वोऽपि त्वत्त इत्यर्थः। तथाऽहं कथं भूतः श्रीपानसत्कः श्रियो लक्ष्म्याः पानं रक्षणं तस्मै सदुत्तमपुरुषान् भवादृशान् फण कण रण

गताविति धातोः फणामि आराधनाय गच्छामीति श्री-पानसत्कः "क्वचित्"॥५।१।१७१॥ इति डे साधुः। त्वां पुनः कथं भूतमफलं दलञिफला विशरणे इत्यतो न फलति न विशीर्यतेऽनन्तचतुष्टयमयस्वस्वरूपात् न भ्रश्यतीति यावत् इत्यफलः अच्। यद्वा, न विद्यते फलं प्रयो-जनं साध्यं यस्याफलः संसिद्धसर्वकार्य इत्यर्थः। इति प्रथमवृत्तार्थः। अस्यां च व्याख्यायां काव्यवर्णानुपूर्व्यैव प्रायो विशेषणानि व्याख्यातान्यसंमोहार्थं न तु कर्तृ-विशेषणानि कर्मविशेषणानि सम्बोधनपदानि च पृथक् पृथगेकपरिपाट्या स्तुतौ च स्तुत्यगुणवर्णनं स्वस्वरूप-निरूपणं च द्वयं विधेयम्, अहमपि कर्तृविशेषणैः सर्वैः स्वरूपनिवेदनं सम्बोधनैस्त्वामिति कर्मविशेषणैश्च भगवद्गुणवर्णनं चक्रे। खलहलीकेलामतिरित्यत्र हली-केल्यंशेन कृषीबलवद्यदि निःश्रीकस्तर्हि श्रीपानमत्क इत्यत्र कथं श्रियः पानाय सत्क इति। अनयोर्विशेषणयो-रसङ्गतिर्न चिन्त्या, यतः कृषीबलवन्निःश्रीक इति

निसोऽल्पार्थत्वादल्पश्रीक इत्यर्थः। यथा ह्यनुदरा कन्या इत्युक्ते कन्याया उदराभावो न ख्याप्यते किंत्वस्याः क्षामोदरत्वमित्येवमत्रापि। भगवतस्तुतौ प्रवृत्तिमत्त्वाच्च श्रीरपि संपत्स्यत इति तामागमिष्यन्तीं सम्भाव्य तत्पालनाय सतां परिचिरणं नानुचितामिति न कोऽपि दोषः॥ १॥

**श्रीजंबीरमपास्य मोचकरणान् नारंगरक्ताधराप्यस्तावायमगुंदसेवकदहीनाघेन गोक्षीरगुम्॥ चारोलीनसुरांह्रिपङ्कजरगोजात्यस्तजांबूनदं स्तौमि त्वां सुगुणाकरं बुधनतं पूडाभलांचूरिमाम्॥ २॥**

[श्रीजं वीरमपास्य मोचक! रणान् नारङ्गरक्ताधर! अप्यस्तावायमगुं दं! सेवकद! हीन! अघेन गोक्षीरगुम्॥ चारो! लीनसुरांह्रिपङ्कज! रगोजात्यस्तजाम्बूनदं स्तौमि त्वां सुगुणाऽऽकरं बुधनतं पूलाभ! डाञ्चूरिमाम्२]

श्रीजम्बीर० ॥ २ ॥ व्याख्या ॥ अत्रापि काव्यवर्णा-नुपूर्व्यैव प्रायो व्याख्याऽ सम्मोहार्थमेव । एवमग्रतोऽपि ज्ञेयम् । हे लीनसुरांह्रिपङ्कज ! लीनाः सेवायै चित्तैकाग्र्यं प्राप्ताः सुरा देवा यत्र एवंविधमंह्रिपङ्कजं पादकमलं यस्य स तथा तस्य सम्बोधनम् । तथा हे चारो ! भुवन-त्रयीसुन्दर त्वां स्तौमि । अस्मदर्थक्रियायोगादहमिति लभ्यते इति सम्बन्धः ॥ तथा श्रीजं मन्मथं वीरं सुभटमपास्य निराकृत्य । हे मोचक ! अपसारक । कस्मा-दित्याह । रणात् युद्धात् । श्रीवीतरागस्तवप्रस्तावात् कामविषयात् भव्यानामिति गम्यम् । सकलभावारिमुख्य-कामभटापासनात् भव्यानां रणादपसारणं यौक्तिक-मेव ॥ तथा हे नारङ्गरक्ताधर ! नारङ्गं ताम्रफलविशेषस्त-द्वद्रक्तावधरौ ओष्ठौ यस्य स तथा तस्यामन्त्रणम् । अपिः समुच्चये, स च सम्बोधनानि समुच्चिनोति । त्वां कथं भूतं अस्तावायमगुं । अस्तः क्षयङ्गतोऽव अपकृष्टोऽयमो ऽसंयमो यस्याः सा तथा एवंविधा गौर्वाणी यस्य स तथा

तं, "गोश्चान्ते ह्रस्व"--२।४।९६॥ इति ह्रस्वः । तथा हे द! दायक सांवत्सरिकदाने भगवतो दायकत्वं प्रसिद्धमेव । तथा सेवकान् उपासकान् दयते पालयतीति "आतो"-५।१।७६॥ इति डे सेवकदस्तस्यामन्त्रणं हे सेवकद! तथा हे हीन! रहित । केनेत्याह, अघेन पापेन । त्वां पुनः कथं भूतं । गोक्षीरगुं गोक्षीरं सुरभीपयस्तद्वत् उज्वलत्वादिगुणैस्तत्समाने "गौर्वाणी भूरश्मिवज्रस्वर्गाक्षिवारिष्वि"ति निघण्टुवचनाद्गावौ अक्षिणी यस्य स तथा तं । त्वां पुनः कथं भूतं रगोजात्यस्तजाम्बूनदं।"रस्तीक्ष्णे"इति वचनात् रास्तीक्ष्णा लक्षणया दीप्ता ये गावो रश्मयः शरीरश्च तेषां जातिः समूहस्तयाऽस्तं निराकृतं जाम्बूनदं काञ्चनं येन स तथा तं। त्वां पुनः कथं भूतं। सुगुणाकरं शोभनगुणोत्पत्तिस्थानं! पुनः कथं भूतं। बुधनतं विद्वन्नमस्कृतं। तथा हे पूलाभ! पवनं पूः क्विप् पावित्र्यतां लभते इति पूलाभः "कर्मणोऽण्"॥५।१।७२॥ आन्तरमलक्षयेण विशुद्धिप्रकर्षं

लभमानः। यद्वा पूः पावित्र्यं तस्यालाभो यस्माद्घाल्लोकानामिति व्यधिकरणबहुव्रीहिरिति, तस्यामन्त्रणं । तथा हे लाचूरिमाम्। डो वृषाङ्क इति, अः पुल्लिङ्गः शार्ङ्गधारिणीति, विरिञ्चावाश्चेति, वचनात् ड ईश्वरः अः कृष्णः आ ब्रह्मा तान् चूरयति लक्षणया दर्शनमात्रात् खण्डितानिव करोतीत्येवंशीला या मा भगवतः श्रीमदष्टमहाप्रातिहार्यादिलक्ष्मीस्तां अमति प्राप्नोतीति विचि, डाचूरिमाम् । यद्वा । ला लौल्यं चूरिश्च विनाशस्तयोर्मा समृद्धिस्तामामयति रुजति अमण् रोग इत्यस्य धातोरुजार्थत्वादिति, लाचूरिमाम् किप्, "णेरनिटि"॥४।३।८३॥ इति णेर्लुक्, तस्य सम्बोधनं। अत्र पूर्वत्र च काव्ये स्वराणां क्वचित् पाठे सानुनासिकत्वम्, अर्थसङ्गत्या च निरनुनासिकत्वं ज्ञेयम्। नच तथा दोषः, विचित्रनामकरम्बितत्वेन चित्रकाव्यत्वात्। एवमग्रतोऽपि भाव्यम्। इति द्वितीयकाव्य वृत्त्यर्थः ॥ २ ॥

**खसखसमुरुकीपोली मांडामांडी लघी-**

यसींघोडाम् । त्वं साकुलीः सुहालीं टोठा-
धाणीचणाऽऽच्छिन्धि ॥ ३ ॥

[खसख ! समुरुकीपोली मांलामांली लघीयसीं घोलाम्।
त्वं साकुलीः सुहालीं टोठाधाणी इचण ! आच्छिन्धि ॥३॥]

खसखस० व्याख्या ॥ हे खसख ! खं चिदि शून्ये चेत्यादिवचनात् खं ज्ञानं तस्य सखा खसखः,"राजन्-सखेः" ।७।३।१०६॥ इत्यट् समासान्तः। ज्ञानसहाय इत्यर्थः। तस्यामन्त्रणा। त्वं सुहालीं सु अतिशयेन घ्नन्ति जन्तूनुपद्रवन्ति सुहानि पापानि क्विप्, तेषामालीं श्रेणीं, आच्छिन्धि समन्ततो विनाशयेति संटङ्कघटना । त्वं कथंभूतः समुरुकीपोली । सम् सामस्त्येन उरूणि गुरूणि यानि कानि सुखानि तानि अतिशयेन विद्यन्ते एषु मत्वर्थीये इनि समुरुकीनि ज्ञानादिरत्नानि ज्ञानादीनां सुखातिशयकारणत्वात्तैरेव स्वर्गापवर्गादिवस्तुवर्गप्राप्तेः । तत एव च तेषां महासुखवत्ता यौक्तिकी । तेषां ई लक्ष्मीं

पुल महत्त्वे इत्यतः पोलयति महतीं करोति इत्येवंशीलः शीलार्थे णिनि समुरुकीपोली। ज्ञानदर्शनचारित्रलक्ष्मी-पोषविधायक इत्यर्थः। त्वं पुनः कथं भूतः मालामाली। मालाः पुष्पस्रजोऽर्चकलोकोपढौकिता मलते धारयतीत्येवंशीलो मालामाली। भोज्यनामत्वे तु सानुनासिकोच्चारः प्रागेव ज्ञापितः मांडामांडी इति। कथं भूतां सुहालीं लघीयसीं सर्वलोकनिन्द्यत्वेनातिलाघवमापन्नाम्। त्वं पुनः कथं भूतः घोलाम्॥ घुटत् प्रतिघाते इत्यस्य णिगन्तस्य घोटयन्ति प्रतिघातयन्तीति क्विपि घोटि कर्माणि तेषामाम् पीडनं यस्माद्यस्य वा सतथा। आमिति अमण् रोग इत्यस्य क्विबन्तस्य "अहन्पञ्चमस्य-" ॥४।१।१०७॥ इति दीर्घरूपम्। न च "स्वरस्य परे प्राग्विधौ"॥ ७।४।११०॥ इति स्थानित्वेन णिज्जा व्यवधानेन कथं दीर्घत्वमिति वाच्यं, "न सन्धिङीयक्विद्विदीर्घ-" ॥७।४।१११॥ इति परिभाषया दीर्घविधौ णिज्लुकः स्थानित्वप्रतिषेधात्। यद्वा, णिजि उपान्त्यवृद्धावेव आमिति

सिद्धम्। ननु कथं "मोनोम्वोश्च" ॥२।१।६७॥ इति मस्य नत्वं न स्यात्, उच्यते, मस्य नत्वे प्राग्विधौ कर्त्तव्ये णिजूलुकः स्थानित्वात् मकारस्य पदत्वस्यैवाभिषेधेन नत्वप्राप्तेरेवाभावात्। त्वं पुनः कथं० साकुली। सायां लक्ष्म्यां न कुत्सितं लीयते इति क्विपि साकुलीः। यद्वा, न कौ पृथिव्यां लीयन्ते इति अकुल्यो देवाः तैः सह परिवृतः समवसरणादौ वर्त्तते यः स साकुलीः। त्वं पुनः कथं भूतः टोठाधाणी। टः पृथिव्यामिति वचनात् टस्य पृथिव्याः। पृथिवीस्थजीवानामित्यर्थः। ऊः रक्षणं। ठस्तु घटे शून्ये वृहद्ध्वनाविति वाक्यात्तस्या यः ठो वृहद्ध्वनिरुद्धोषणादिरूपस्तत्र तस्मै वा आ समन्ततो धण शब्दे इति धातोर्धणति शब्दायते इत्येवंशीलः शीले णिनि टोठाधाणी, जगज्जन्तुजातरक्षणोद्धोषणोपदेशक इत्यर्थः॥ तथा हे इचण! इः कामस्तं चिन्वन्ति पुष्णन्तीति डे, इचा विषयास्ते "णः प्रकटे निष्फले चेति वचनात्" णा निष्फला यस्मिन्

स इचणः, निष्फलविषयपराक्रम इत्यर्थः, तस्यामन्त्रणा ॥ इति तार्त्तीयीकवृत्तार्थः ॥ ३ ॥

**कोठीभडामरघ्नेश पापडक्षाब्जभंजने ।**
**सालेवडांचिते भक्त्या तिष्ठंस्ते न सुखावडी ॥ ४ ॥**

[कोठी इभ. ! डामरघ्न ! ईश ! पापलक्षाब्जभञ्जने ।
साले वलाञ्चिते भक्त्या तिष्ठंस्ते न सुखावली ॥४॥]

कोठीभ० व्याख्या। हे ईश ! स्वामिन्। तथा हे डामरघ्न ! डामराण्यशिवानि हन्ति विनाशयतीति ब्रह्मादित्वात् टकि डामरघ्नस्तस्यामन्त्रणा। तथा हे इभ ! गज । क्वेत्याह, पापडक्षाब्जभञ्जने । अंहःसंहातिकमलमर्दने । सुखावलिमिच्छति सुखावलीयति सुखावलीयतीति क्विपि "अतः" ॥ ४ । ३ । ८२ ॥ इत्यलुकि "य्वोःप्वय्-" ॥ ४ । ४ । १२१ ॥ इति य्लुकि च सुखावलीः सुखश्रेणिमिच्छुः पुमान् ते तव साले समवसरणप्राकारे बलाञ्चिते त्रिभुवनत्राणसामर्थ्यान्विते भक्त्या तिष्ठन्नव-

स्थितिं कुर्वन् कोठी न स्यात् । कोठस्तु मण्डलमिति नामचिन्तामणिवचनात् मण्डलाकारं कुष्ठं कोठः सोऽस्यास्तीति कोठी । कुष्ठस्य महारोगत्वात्तद्रहितत्वज्ञापनेन तदपरसकलरोगरहितत्वं सुतरां ज्ञापितं भवति । भक्तामरभयहरादिस्तवेषु तथैव ज्ञापितत्वात् । भगवत्समवसरणभूमिं पुनः प्राप्तानां सर्वरोगरहितत्वे किमुच्यते । इति चतुर्थवृत्तार्थः ॥ ४ ॥

**कंकोडायनमाऽस्य ददतं कर्मदाहकम् ।**
**काकडीभिश्चकारेलाविषयं नो जिनं जनः ॥५॥**

[कं कोडायनमारस्य ददतं कर्मदाहकम् ।
काकलीभिश्चकार ईडाविषयं नो जिनं जनः ॥५॥]

कङ्कोडा० ॥ व्याख्या॥ कं सुखं ददतं ददानं । आरस्य अरिसमूहस्य डायनमुड्डायनकारकं सन्त्रासकमित्यर्थः। तथा कर्मदाहकं अष्टविधकर्मणां दाहकारकं जिनं श्रीवीतरागम्, को जनः प्राणी काकलीभिर्मधुरसूक्ष्मस्वरविशेषैः कृत्वा ईडाविषयं स्तुतिगोचरं नो चकार नाकार्षी-

त। अपि तु सर्वोऽपि स्तुतवानित्यर्थः ॥ इति पञ्चम वृत्तार्थः ॥ ५ ॥

**रसांगरीत्या त्वद्वाणीः कइरम्यं जहत्यघम्।**
**मानबाउलियापीय आमलांग जिनेश नो॥६॥**

[रसाङ्गरीत्या त्वद्वाणीः क इरम्यं जहत्यघम्।
मानवा उ लियाऽऽपीय आमलाङ्ग! जिनेश! नो ॥६॥]

रसाङ्ग० ॥ ६ ॥ व्याख्या ॥ हे जिनेश! तथा हे आमलाङ्ग! आ समन्ततोऽमलमङ्गं यस्य तस्यामन्त्रणा। रसाङ्गरीत्या रसाङ्गयुक्त्या त्वद्वाणीस्तव गिरश्चापीय श्रुति-पुटैः पीत्वा के मानवा मनुष्याः एः कामस्य पक्षभूतत्वा-द्रम्यं मनोहरं इरम्यं अघं पापं न जहति अपि तु सर्वेऽपि पापरोगापसारणे रसाङ्गसमाः त्वद्वाणीर्निपीय पापरोगं त्यजन्तीत्यर्थः। उ इति कोमलामन्त्रणे। आपीय कयेत्याह। लिया, लयेन चित्तैकाग्र्यविशेषेणेति यावत्। आपीय आमलाङ्गेत्यत्र विरामविवक्षया सन्ध्यभावः। इति षष्ठ वृत्तार्थः ॥ ६ ॥

घटींडूरांचितारस्य डोडिकान्तकचस्यते ।
लोकं कुठवडीतप्तमकर्पटांगतर्पयेत् ॥ ७ ॥

[घटीं लूराञ्चितारस्य डोऽलिकान्तकचस्य ते ।
लोकं कुठवलीतप्तं अकर्पट! अङ्ग! तर्पयेत् ॥ ७ ॥ ]

घटींरू० ॥ व्याख्या ॥ अङ्गेति कोमलामन्त्रणे । हे अकर्पट नास्ति कर्पटं वस्त्रं यस्य सोऽकर्पटः वस्त्राभावेन शेषनिश्शेषपरिग्रहस्याप्यभावोऽवगम्यते । यदुक्तम् । "वपुर्विरूपाक्षमलक्षितं जनुर्दिगम्बरत्वेन निवेदितं वसु ॥ वरेषु यद्बालमृगाक्षि ! मृग्यते तदस्ति किं व्यस्तमपि त्रिलोचने ॥ १ ॥ इति ॥ तस्यामन्त्रणा । ते तव डो ध्वनिर्लोकं जनं तर्पयेत् प्रीणयेत् । तव कथं भूतस्य घटीमपि व्याप्य लूराञ्चितारस्य लूः छेदनं तां रातीति लूरं मरणं तत् अञ्चितं प्राप्तं आरमरिसमूहो यस्य स तथा तस्य स्वल्पकालमध्ये समूलकाषं कषितद्विषद्वर्गस्येत्यर्थः । पुनस्ते कथं भूतस्य अलिकान्तकचस्य अलिर्भ्रमरस्तद्वत् कान्ताऽतिशयेन कान्ताः

कमनीयाः कचाश्चिकुरा यस्य तस्य । लोकं कथं भूतं कुठवडीतप्तं कुत्सितः ठो रुद्र उपलक्षणत्वाच्छेषा अपि तथाविधसुराः वली च, जरा लक्षणम्, लक्षणेन च लक्ष्यं ध्वन्यते, ततश्च बलीशब्देन जरा कथ्यते, तैस्तप्तं सन्तापितं कुदेवजरादिसन्तापितामित्यर्थः ॥ इति सप्तमवृत्तार्थः ॥ ७ ॥

**आयुःपूरणमारस्य निरमाः शुभसूरणम् ।**
**दुःखांडमीशाकुरुथाःखंडशः सवडांगकः॥८॥**

[आयुःपूरणम् आरस्य निरमाः शुभसूः रणम् ।
दुःखाण्डम् ईश ! अकुरुथाः खण्डशः सबलाङ्कः॥८॥]

आयुः ॥ व्याख्या ॥ हे ईश! त्वं शुभसूर्मङ्गलजनयिता आरस्य आन्तरारिसमूहस्यायुःपूरणं जीवितकालसमापकं रणमायोधनं निरमाः अकार्षीः । त्वं कथं भूतः सबलाङ्कः बलिष्ठदेहः । तथा त्वं दुःखाण्डं दुःखमेवाण्डं खण्डशश्चूर्णं अकुरुथाः अकार्षीः । इत्यष्टमवृत्तार्थः ॥ ८ ॥

**रावडीलासुधामस्येद्रंभांजंघारडीनते ।**
**दृढोऽकलांतनार्थेते यस्तस्येशनवाकला ॥९॥**

[रावलीला सुधामस्येद् रम्भां जङ्घाऽऽरलीन! ते।
दृढोऽकलान्त! न अर्थे ते यस्तस्येश! नवा कला ॥९॥]

रावडी० ॥ व्याख्या० ॥९॥ हे ईश। हे अकलान्त! अकला अविज्ञानानि अन्तयति विनाशयतीति अकलान्तस्तस्यामन्त्रणा। ते तव रावलीला वचनललितं सुधाममृतमस्येत् माधुर्यातिशयेन निराकुर्यात्। तथा ते तव जङ्घा प्रसिद्धा सौकुमार्यातिशयेन रम्भाङ्कदलीमस्येद्। तथा हे आरलीन आ समन्तात् अरणं आरः अल्प्रत्ययः सर्वे गत्यर्था ज्ञानार्था इति न्यायात् ज्ञानमित्यर्थः, तत्र लीनः प्रसक्त इत्यर्थः तस्य संबोधनं। तथा यस्ते तवाऽर्थे पूजने न दृढोऽस्थिरधीर्भवति तस्य पुरुषस्य नवा कला अपूर्वं विज्ञानमित्यर्थः। नवाकलेति विपरीतलक्षणयोपहासः प्रकाश्यते। इति नवमवृत्तार्थः॥

**कइरींधनभारस्य नादुस्तेशकटींडसाम्।**

शुचीभडांछन स्वामिन् प्राप्याबालहलिस्तुत
[क इरीन्धनभारस्य नादुस्ते शकटीं डसाम्।
शुचि इभलाञ्छन! स्वामिन्! प्राप्य अबाल! हलिस्तुत!० १]

कइरीं० ॥ व्याख्या ॥ हे स्वामिन्! तथा हे अबाल! विदुषाम्बर तथा हे हलिस्तुत! बलदेवेन स्तुत उपलक्षणत्वादुपेन्द्रमहेन्द्रचक्रवर्त्यादिभिरपि । इः कामस्तस्य रीं वा गतिरेषणयोरितिधातोः क्विबन्तस्य हिंसापरपर्याये रेषणार्थे प्रयुज्यमानस्य रीयत इति रीः क्विप् हिंसा तल्लक्षणस्येन्धनभारस्य एधःसमूहस्य शकटीमङ्गारशकटीं नादुर्न दत्तवन्तः ॥ अङ्गारशकटीति नाम्नि सत्यपि "ते लुग्वा" ।३।२।१०८॥ इति पूर्वपदलुकि शकटी, यथा सत्याभामेत्यत्र भामेति। किं कृत्वा ते तव डस्य ध्वनेः सां लक्ष्मीं शुचि यथा भवत्येवं प्राप्य। तथा हे इभलाञ्छन! द्वात्रिंशल्लक्षणमध्ये य इभो गजः स लञ्छनं यस्य स तथा तस्यामन्त्रणम् । इति दशमवृत्तार्थः ॥ १० ॥

जनः कल्याणभाजी स्यात् सकडोडीन-

धीः पदे । तेवोरुभक्तिमान् देवसुलापीलू-
नदुर्मतिः ॥ ११ ॥

[जनः कल्याणभाजी स्यात् सकलो लीनधीः पदे ।
ते वोरुभक्तिमान् देव! सुलापी लूनदुर्मतिः ॥११॥

जनः क० ॥ व्याख्या ॥ हे देव ! तव पदे क्रमकमले लीनधीः आसक्तबुद्धिः सकलो जनः कल्याणानि भजते इत्येवंशीलः कल्याणभाजी । केवलात् भजतेस्तु घिनाणि भागीत्येव स्यात् तेन संयुक्तमेव वाक्यं क्रियते, स्यात् भवेत् । जनः कथं भूतः उरुभक्तिमान् उरुश्चासौ भक्तिश्च सा विद्यतेऽस्येति उरुभक्तिमान् । अत्र बहुव्रीहेः प्रसङ्गेऽपि मतुर्भवति । यथा । आकैलासाद्बिसकिसलयच्छेदपाथेयवन्त इति, गौरखरबदरण्यमिति वा । सुष्टु माधुर्यादिगुणैः शोभनं यथा स्यादेवं लपति वक्ति इत्येवंशीलः सुलापी । माधुर्यसारस्यादिगुणप्रगुणवाणीक इत्यर्थः । तथा लूनदुर्मतिः लूना च्छिन्ना दुर्मतिर्मिथ्याबुद्धिर्येन स तथा । एतेन जिन-

मतैकभक्तिक इत्युक्तम् । इति एकादशवृत्तार्थः ॥११॥

**एवं स्तुतिः शुभवतो भवतः प्रसिद्ध-**
**सद्भोज्यशाकवरनामविराजिमध्या ।**
**स्वामिन् ! परार्थघटनापटुराशु कर्तु-**
**र्निर्दम्भमाभ्युदयिकीं वितनोति लक्ष्मीम् १२**

## ॥ श्रीजिनस्तुतिर्विषमार्था ॥

**। भोज्यादिनामभिर्गर्भितामिदं स्तवनं संपूर्णम् ।**

एवं स्तुतिः ॥ व्याख्या ॥ हे स्वामिन् ! एवमुक्तप्रकारेण शुभवतः कल्याणभाजो भवतस्तव स्तुतिः स्तवनं कर्तुः स्तोतुरित्यर्थः । निर्दम्भं निर्व्याजं । आशु शीघ्र यशःप्रमोदसुखपुण्यसमृद्ध्यादिरूपां लक्ष्मीं वितनोति विशेषेण विस्तारयति । कथं भूता स्तुतिः। सन्ति प्रधानानि च तानि भोज्यानि च सद्भोज्यानि शाकेषु वराणि शाकवराणि ततो द्वन्द्वः तेषां नामानि प्रसिद्धानि लोकप्रतीतानि च तानि सद्भोज्यशाकवरनामानि च तैर्विराजि

विराजनशीलं मध्यं यस्याः सा तथा। पुनः कथं भूता। परार्थघटनापटुः परे प्रतीयमानेभ्योऽन्ये येऽर्थास्तेषां या घटना योजना तत्र पटुश्चतुरा। अथवा पराः प्रकृष्टा भगवत्स्तुतियोग्या येऽर्थास्तेषां घटना। अथवा परः प्रकृष्टो योऽर्थः सिद्धिलक्षणस्तस्य घटना मेलनम्। अथवा परार्थः परकार्यं परोपकारस्तस्य घटना तत्र पटुः। परोऽत्र स्तोता इति। अस्यां च स्तुतौ बहवोऽप्यर्था उदयन्ते ऽपरेऽपि ते तु कुशाग्रीयबुद्धिभिः स्वयमवधार्याः। एतद्व्याख्याया दिग्मात्रप्रकाशकत्वादिति द्वादशवृत्तार्थः॥ १२॥

इति विबुधश्रुतसागरकौतुकहेतोरिमां स्तुतिं विदधे।
वृत्तिं च देवसुन्दरगुरुशिष्यः साधुराजगणिः॥ १॥

महामहोपाध्यायश्रीसाधुराजगणिकृते स्तुतिवृत्तिः॥



॥ अर्हम् ॥

॥ ॐ नमः ॥

भक्तामरप्रणतमौलिमणिप्रभाणा-
मुद्दीपकं जिनपदाम्बुजयामलं ते ।
स्तोष्ये मुदाऽहमनिशं किल मारुदेव
दुष्टाष्टकर्म्मरिपुमण्डलभित्सुधीर ॥ १ ॥

श्रीमज्जिनेश्वरकलापमहं स्तुवेरमु-
द्योतकं दलितपापतमोवितानम् ।
भव्याम्बुजातदिननाथनिभं स्तवीमि
भक्त्या नमस्कृतममर्त्त्यनराधिराजैः ॥ २ ॥

वर्या जिनक्षितिपतेस्त्रिपदीमवाप्य
गच्छेश्वरैः प्रकटिता किल वाग्मुदा या ।
सम्यक् प्रणम्य जिनपादयुगं युगादा-
वेवं शुभार्थनिकरैर्भुवि सास्तु लक्ष्म्यै ॥ ३ ॥

यक्षेश्वरस्तव जिनेश्वर गोमुखाह्वः
सेवां व्यधत्त कुशलक्षितिभृत्पयोदः ।

त्वत्पादपङ्कजमधुव्रततां दधाना-
बालम्बनं भवजले पततां जनानाम् ॥ ४ ॥

इति ऋषभदेवजिनस्तुतयः ॥ १ ॥

॥ अर्हम् ॥

कल्याणमन्दिरमुदारमवद्यभेदि
दुष्कर्मवारणविदारणपञ्चवक्त्रम् ।
यत्पादपद्मयुगलं प्रणमन्ति शक्राः
स्तोष्ये मुदा जिनवरं जिनत्रैशलेयम् ॥१॥
क्षीणाष्टकर्म्मनिकरस्य नमोस्तु नित्यं
भीताभयप्रदमनिन्दितमंह्रिपद्मम् ।
इष्टार्थमण्डलसुमर्जनदेववृक्षं
नित्योदयं दलिततीव्रकषायमुक्तम् ॥ २ ॥
जैनागमं दिशतु सर्वसुखैकदारं
श्रीनन्दनक्षितिजहृव्यहतिप्रकारम् ।
संसारसागरनिमज्जदशेषजन्तु-
बोहित्थसन्निभमभीष्टदमाशु मुग्धम् ॥ ३ ॥

मातङ्गयक्षरमलं प्रकरोति सेवां
पूर्वान्तमारसमभीप्सितदं विशालम् ।
उत्पत्तिविस्तरनदीशपतज्जनानां
पोतायमानमभिनम्य जिनेश्वरस्य ॥ ४ ॥
इति श्रीवीरजिनस्तुतयः ॥ २ ॥

॥ अर्हम् ॥

सकलकुशलवल्लीपुष्करावर्त्तमेघो
मदनसदृशरूपः पूर्णराकेन्दुवक्त्रः ।
प्रथयतु मृगलक्ष्मा शान्तिनाथो जनानां
प्रसृतभुवनकीर्त्तिः कामितं कम्रकान्तिः ॥१॥
जिनपतिसमुदायोदायकोऽभीप्सितानां
दुरिततिमिरभानुः कल्पवृक्षोपमानः ।
रचयतु शिवशान्तिं प्रातिहार्य्यश्रियं यो
विकटविषमभूमीजातदर्त्तिं बिभर्त्ति ॥ २ ॥
प्रथयतु भविकानां ज्ञानसंपत्समूहं
समय इह जगत्यामाप्तवक्त्रः प्रसूतः ।

भवजलनिधिपोतः सर्वसम्पातिहेतुः
प्रथितघनघटायां सर्पकान्तप्रकारः ॥ ३ ॥
जयविजयमनीषामन्दिरं ब्रह्मशान्तिः
सुरगिरिसमधीरःपूजितोन्यक्षयक्षैः ।
हरतु सकलविघ्नं यो जने चिन्त्यमानः
स भवतु सततं वः श्रेयसे शान्तिनाथः ॥४॥

इति शान्तिजिनस्तुतयः ॥ ३ ॥

॥ अर्हम् ॥

श्रेयःश्रियां मङ्गलकेलिसद्म श्रीयुक्तचिन्तामणिपार्श्वनाथ ।
दुर्वारसंसारभयाच्च रक्ष मोक्षस्य मार्गे वरसार्थवाहः ॥१॥
जिनेश्वराणां निकरे क्षमायां नरेन्द्रदेवेन्द्रनतांह्रिपद्म ।
कुरुष्व निर्वाणसुखं क्षमाभृत् सत्केवलज्ञानरमां दधान ॥२॥
कैवल्यवामाहृदयैकहार क्षमासरस्वद्रजनीशतुल्यः ।
सर्वज्ञ सर्वातिशयप्रधान तनोतु ते वाग्जिनराज सौख्यम् ३॥
श्रीपार्श्वनाथक्रमणाम्बुजातसारङ्गतुल्यः कलधौतकान्तिः ।
श्रीयक्षराजोगरुडाभिधानः चिरञ्जय ज्ञानकलानिधान॥४॥

इति पार्श्वजिनस्तुतयः ॥ ४ ॥

॥ अर्हम् ॥

कमलवल्लपनं तव राजते जिनपते भुवनेश शिवात्मज ।
मुकुरवद्विमलं क्षणदावशात् हृदयनायकवत् सुमनोहरम् १॥
सकलपारगताः प्रभवन्तु मे शिवसुखाय कुकर्म्मविदारकाः।
रुचिरमङ्गलवल्लिवने घनाः दशतुरङ्गमगौरयशोधराः ॥२॥
मदनमानजरानिधनोज्झिता जिनपते तव वागमृतोपमा ।
भवभृतां भवताच्छिवशर्मणे भवपयोधिपतज्जनतारका॥३॥
जिनपपादपयोरुहहंसिका दिशतु शासननिर्जरकामिनी ।
सकलदेहभृताममलं सुखं मुखविभाभरनिर्जितभाधिपा॥४॥

इति नेमिजिनस्तुतयः ॥ ५ ॥

---

॥ अर्हम् ॥

ज्ञात्वा प्रश्नं तदर्थं गणधरमनसं प्राग्वदेद्वीरदेवः
अर्हत्सिद्धार्यसाधुप्रभृतिनवपदान् सिद्धचक्रस्वरूपान् ।
ये भव्याश्रित्य धिष्णं प्रतिदिनमधिकं संजपन्ते स्वभक्त्या
ते स्युः श्रीपालवच्च क्षितिवरपतयः सिद्धचक्रप्रसादात्॥१॥

दुस्तीर्णं निस्तरीतुं भवजलनिधिकं पाणियुग्मे गृहीत्वा
यानेकान् कोटिकुम्भान् कनकमणिमयान् षष्टिलक्षाभियुक्तान्।
गङ्गासिन्धुह्रदानां जलनिधितटतस्तीर्थतोयेन भृत्वा
सत्सर्वाधीश्वराणां सुरपतिनिकरा जन्मकृत्यं प्रचक्रुः ॥२॥
कुर्युर्देवास्त्रिवप्रं रजतमणिमयं स्वर्णकान्त्याऽभिरामे
स्थित्वा स्थाने सुवाक्यं जिनवरपतयः प्रावदन् यां च नित्यम्
तां वाचां कर्णकूपे सुनिपुणमतयः श्राद्धयो ये पिबन्ति
ते भव्याः शैवमार्गागमविधिकुशला मोक्षमाशु प्रयान्ति ।३॥
देवी चक्रेश्वरी स्रग्दधति च हृदये पत्तने देवकाख्ये
कामे मोदाभिकीर्णे विमलपदयुजैः सिद्धचक्रस्य बीजे ।
श्रीमद्धर्षादियुक्तैर्विजयप्रभवरैर्वर्यरूपैर्मुनीन्द्रैः
स्तुत्या नित्यैः सुलक्ष्मीविजयपदधृतैः प्रेमपूर्णे प्रसन्ना ॥४॥

इति श्रीसिद्धचक्रस्तुतयः ।

॥ अर्हम् ॥

शैवेयः शङ्खकेतुः कलितजनमनःसंशयः सर्वकालं
विश्वेशोऽसौ च देहद्युतिविजितघनः कर्मधर्मामृतांशुः।

क्षान्त्याढ्यः कष्टदुष्टक्षयकरणपरो रैवतोत्तंसतुल्यः
कल्याणं पञ्चमी सत्तपसि वितनुतां पञ्चमज्ञानवान्वः॥१॥
नाभेय त्रैशलेय प्रथमचरमकश्चन्द्रवच्चारुचञ्चन्-
मूर्त्तिः स्फूर्त्ति दधानः प्रथयति कुमुदं यो बुधाह्लादहेतुः ।
प्रोद्दामश्छद्मपद्मा पिकचकखरवः सत्कलावान्मनोज्ञो-
ज्ञानं पुष्याज्जिनौघः स तपसि भविनां पञ्चमी वासरस्य ॥२॥
गीर्वाणाधीशपुंसांपतिकुसुममिदं पुण्यभाजोमनुष्या
निर्वाणामेयसौख्यं प्रबलफलमथो यत्प्रसादाल्लभन्ते।
श्रीसार्वप्रौढशुद्धागमधरणिरुहः सिद्धिदानैकरक्त-
स्तत्पञ्चम्यास्तपस्युद्यतविशदधियां भाविनामस्तु नित्यम् ।३।
संपूर्णा पूर्णिमेन्दुप्रभसुभगगुणैर्दत्तदेवेन्द्रनाना-
प्रोद्यद्गन्धद्विपेन्द्रप्रचुरमदहरैणाधिपे राजमाना ।
श्रीअर्हद्भक्तिभावा विमलकजकरा भास्वदम्बाभिधाना
पञ्चम्यह्नस्तपोर्थं वितरतु कुशलं धीमतां सावधाना ॥ ४ ॥

इति ज्ञानपञ्चमीस्तुतयः ।

॥ अर्हम् ॥

स्फूर्जद्भक्तिनतेन्द्रशीर्षविलसत्कोटीररत्नावली-
रङ्गत्कान्तिकरम्बिताद्भुतनखश्रेणीसमुज्जृम्भितम्।
सिद्धार्थाङ्गरुहस्य कीर्त्तितगुणस्यांह्रिद्वयं पातु वः
स्नातस्याप्रतिमस्य मेरुशिखरे शच्या विभोः शैशवे ॥ १ ॥
श्रेयः शर्मकृते भवन्तु भवतां सर्वेऽपि तीर्थाधिपाः,
येषां जन्ममहः कृतः सुरगिरौ वृन्दारकैः सादरैः।
पौलोमीस्तनगर्वखण्डनपरैः कुम्भैः सुवर्णोद्भवैः,
हंसांसाहतपद्मरेणुकपिशक्षीरार्णवाम्भोभृतैः ॥ २ ॥
सेवे सिद्धान्तमुद्यत्सकलमुनिजनप्रार्थितामर्त्त्यरत्नं
गर्ज्जद्वाचाटवादिद्विरदघनघटादर्पकण्ठीरवाभम्।
मिथ्याधर्मान्धकारे स्फुटविकटकरादित्यमल्पप्रभं नो
अर्हद्वक्त्रप्रसूतं गणधररचितं द्वादशाङ्गं विशालम् ॥ ३ ॥
दक्षो यक्षाधिराजोमहिमगुणनिधिश्चण्डदोर्दण्डधारी
सर्वः सर्वानुभूतिर्विदलयतु मुदा सङ्घविघ्नं महौजाः।
अध्यारूढोद्विपेन्द्रं वरभवनगतस्तम्भहस्तोत्कटास्यं
निष्पङ्कव्योमनीलद्युतिमलसदृशं बालचन्द्राभदंष्ट्रम् ॥ ४ ॥

इति श्रीवीरजिनस्तुतयः।

---

॥ अर्हम् ॥

नम्रेन्द्रमौलिप्रपतत्परागयुज-
स्फुरत्कर्बुरितक्रमाब्जम् ।
वीरं भजे निर्जितमोहवीरं
संसारदावानलदाहनीरम् ॥ १ ॥
पुष्पौघपद्मदलसौरभगुण्डितानि
स्वर्णाम्बुजैः सुरकृतैः परिमण्डितानि ।
वन्देऽर्हतां वरपदानि नतान्यजेन
भावावनामसुरदानवमानवेन ॥ २ ॥
नाना रत्नैः सुभगमतुलप्रौढसादृश्यपाठै-
र्विज्ञज्ञातैर्बहुनयभरैः सत्तरङ्गैरुपेतम् ।
युक्त्या जैनं समयमुदधिं कीर्त्तयाम्यस्मि कामं
बोधागाधं सुपदपदवीनीरपूराभिरामम् ॥ ३ ॥
श्रीमद्वीरक्रमाम्भोरुहरसिकमना राजहंसीव रम्या
सिद्धा सिद्धाविरुद्धा विशदगुणलसद्भक्तहृत्पद्मरुद्धा ।
या धत्ते स्वीयकण्ठे घनसुरभिरसां पुष्पमालां विशाला-
मामूलालोलधूलीबहुलपरिमलालीढलोलालिमालाम् ॥४॥

इतिश्रीजिनस्तुतयः ।

॥ अर्हम् ॥

# श्रीजिनसुन्दरसूरिकृतम् ।

# श्रीसीमन्धरस्वामिस्तवनम् ।

श्रीमन्तमर्हन्तमनन्तचिन्मयं
त्वां भक्तितो नाथ यथार्थवाङ्मयम् ।
सीमन्धरश्रीजिनमस्तदूषणं
स्तवीम्यहं पूर्वविदेहभूषणम् ॥ १ ॥

रक्तो गुणैः किं नतनाकिराज ते
सेवां श्रितोऽशोकतरुः सुराजते ।
आजानुनानाविधवर्णबन्धुरः
पुष्पव्रजोऽप्यद्भुतसौरभोद्धुरः ॥ २ ॥

सर्वाङ्गभाजां प्रतिबोधकारक-
स्तव ध्वनिः शान्तरसावतारकः ।
चञ्चच्चलच्चामरराजिरुज्ज्वला
पार्श्वेषु ते चन्द्रमरीचिमञ्जुला ॥ ३ ॥

तथांशुजालैर्जटिलं तवासनं
    सिंहाञ्चितं भाति तमोनिरासनम् ।
भामण्डलं भासितभूमिमण्डलं
    बभास्ति पृष्ठे जितभानुमण्डलम् ॥ ४ ॥
सदुन्दुभिस्ते दिविविस्मयप्रदो
    नदन्न केषां ददते च संमदम् ।
छत्रत्रयं कुन्दवरेन्दुसुन्दरं
    विश्वाधिपत्यं तव सूचयत्यरम् ॥ ५ ॥
स्फुरज्ज्ञानसन्तानलक्ष्मीनिधानं
    भजन्तेऽत्र ये ते पदाब्जं प्रधानम् ।
अरं तेष्वमेया रमन्ते विरामं
    सहर्षं विशेषा रमाया निकामम् ॥ ६ ॥
अवाप्य प्रजा भूरिभाग्यैकलभ्यं
    भजन्ते भवन्तं विभो शर्मलभ्यम् ।
किमु स्थूललक्षं लसत्कल्पवृक्षं
    लभन्ते न लब्ध्वा नरा मङ्क्षु सौख्यम् ॥ ७॥

लसत्केवलज्ञाननव्यांशुमाली
मरालावलीमञ्जुलश्लोकशाली ।
धराधीश सीमन्धर त्वं लुनीषे
जनैनांसि यस्मान्न कं कं पुनीषे ॥ ८ ॥
प्रभो प्रातरुत्थाय यो नंनमीति
भवन्तं न सोऽङ्गी भवे बंभ्रमीति ।
त्वदुक्तेषु येषां मनो रंरमीति
भयेनैव तेभ्यो भयं दन्द्रमीति ॥ ९ ॥
अविश्रामदृक्पेयलावण्यगेहं
भवन्तं निभाल्य प्रभो हेमदेहम् ।
कृतार्थानि कुर्वन्ति ये नित्यमेव
स्वनेत्राणि धन्यास्त एवेह देव ॥ १० ॥
महाश्चर्यमैश्वर्यमीश त्वदीयं
प्रमोमुद्यते ऽवेक्ष्य चेतो यदीयम् ।
न केषां भवेयुस्तमां माननीया
घनश्लोकभाजश्च ते श्लाघनीयाः ॥ ११ ॥

आपत्तापाद्रक्षितारं क्षितारं
 भव्यव्रातं विश्वविश्वेशितारम् ।
सेवन्ते त्वां के न मर्त्त्या अमर्त्त्या
 मूर्त्ते धर्मे नाथ मुक्तान्यकृत्याः ॥ १२ ॥
नीरागोऽपि ग्रामरागं गृणासि
 सन्मायोऽपि व्यक्तमायां मृणासि ।
निस्त्रैगुण्यः सद्गुणौघं च धत्से
 कस्याश्चर्यं तेन नेतर्न दत्से ॥ १३ ॥
सीमातीतां विश्वहर्षप्रणालीं
 कोऽन्यस्तेऽलं स्तोतुमास्ते गुणालीम् ।
लोकालोकाकाशसर्वप्रदेशा-
 नीष्टे ज्ञातुं को विना श्रीजिनेशात् ॥ १४ ॥
भावारिभ्यो भूरिभीत्याऽवसन्ना
 देवाः सर्वे यस्य सेवां प्रपन्नाः ।
दीनं दीनं देव सीमंधराख्य
 स त्वं रक्षादक्ष मां रक्ष रक्ष ॥ १५ ॥

प्रत्यूषे त्वां नंनमन्नाकिनाथं
क्षोणिख्यातं केवलश्रीसनाथम् ।
के के धन्या नैव मिथ्यात्वमाथं
संसेवन्ते सन्ततं तीर्थनाथम् ॥ १६ ॥

इति सुधमधुरत्वोऽमन्दमानन्ददायी
सुरनरवरतिर्यक्सर्वभाषानुयायी ।
वसति मनसि नेतर्ध्वस्तमोहप्रमाद-
स्तव कृतसुकृतानां देशनाया निनादः ॥१७॥

अमरनरगणानां संशयान् संहरन्ती
शिवपुरवरमार्गं देहिनां व्याहरन्ती ।
भवति शरणहेतुः कस्य नो नाथ वाणी
भवभवभयभाजस्तेऽघवल्लीकृपाणी ॥ १८ ॥

असुरसुरतिरश्चां यत्र वैरोपशान्तिः
स्फुरति हृदि वरिष्ठाऽऽनन्दचित्तप्रशान्तिः ।
समवसरणभूमिर्विश्वविश्वासभूमि-
र्जगति जनशरण्या तेऽस्त्यघानामभूमिः ॥१९॥

अनुसरति तपोऽर्थं काननं वा धनं वा
त्यजति सृजति जन्तुः संयमौघं घनं वा ।
तव वचनविलासैर्यद्विना देवदेव
भवति जिनपते यन्निष्फलं सर्वमेव ॥ २० ॥
भक्तिप्रह्वत्रिदशविसरं घोरसंसारसिन्धुं
भ्रान्त्वा प्रापं शरणमधुना त्वामहं विश्वबन्धुम् ।
श्रीमन् सीमन्धर जिन तथा तत्प्रसीद त्वमेव
यद्वद्दीनः पुनरिह भवे नो विषीदामि देव ॥२१॥
दुःस्थावस्थास्थपुटितभवापारवन्यां विहीनः
सम्यग्मार्गाद् भ्रमणवशतो दुर्दशां देव दीनः ।
नाऽऽप्तः कां कामिह पुनरवाप्तेऽपि गन्तुं प्रमाद-
स्तास्मिन् दत्ते न मम हृदये तेन नेतर्विषादः ॥२२॥
सेवं सेवं तव पदयुगं स्यां कृतार्थः कदाऽहं
पीत्वा वाक्यामृतरसमहं स्वं क्षिपे कर्मदाहम् ।
इत्येवं मे सदभिरुचितं देवपादप्रसादात्
पूर्त्तेर्वीथीमनुसरतु ते दत्तदुःखावसादात् ॥२३॥

राज्यैराज्यैरिव विषयुतैर्नार्थिना विश्वनेत-
भोगैरोगैरिव मम सृतं सर्वदोषापनेतः ।
दिष्ट्या दृष्ट्या तव परपदाम्भोजयुग्मं कृतार्थः
प्रेक्ष्य प्रेक्ष्य क्षपितदुरितः स्यां नु लब्धार्थसार्थः॥२४॥

एवं निर्भरभक्तिसंभृतहृदा नोऽतिक्रियाकर्मतां
नीतः स्फीततमप्रभावभवनं त्वं नाथ सीमन्धर ।
तद्वत्तन्मयदेव सुन्दरतरं कुर्याः प्रसादं यथा
भूयासं भवदुक्तशासनवराऽऽसेवाविधौ सोद्यमः ॥२५॥

इति श्रीसीमन्धरस्वामिस्तवनं श्रीजिनसुन्दरसूरिकृतम् ॥ १ ॥



॥ अर्हम् ॥

# श्रीजिनसुन्दरसूरिकृतं श्रीपार्श्वनाथस्तवनम् ।

विश्वव्यापियशःप्रभावविभवं सद्भूतभक्त्याऽऽनत-
व्रातानल्पविकल्पजल्पकमलासङ्कल्पकल्पद्रुमम् ।
स्फूर्जत्कज्जलमंञ्जुलच्छवितनं श्रीपार्श्वदेवं स्तुवे
जीरापल्लिपयोधिनेमिमहिलाभालस्थलालङ्कृतिम् ॥१॥

पद्मोल्लासकरस्तमोभरहरः प्रध्वस्तपङ्कोत्करः
स्फूर्जद्भाःप्रसरः पदार्थविसरप्रोद्भासने तत्परः ।
नित्यं क्लृप्तसुवासरः क्षितदरः प्रौढप्रभावाकरः
पुण्यैर्विश्वपते स्फुरद्दिनकरः प्राप्तोऽसि दृग्गोचरः ॥२॥

दारिद्र्यं गतमद्य देव दुरितं दूरं व्युदस्तं दितं
दैन्यं घोरविपद्धटा विघटिता विघ्नव्रजा जिघ्निरे ।
भाग्यैर्जागरितं शुभैर्विकसितं श्रेयोभिरुज्जृम्भितं
पादाम्भोजनिभालनं तव विभो जज्ञेऽधुना येन मे ॥३॥

ध्वस्तोपाधिविशुद्धसंयमतपःकारुण्यसाम्यश्रियः
सद्यः सात्म्यमुपागतास्तव तथा स्वामिन् स्वभावादपि ।
एतासामनुभावतो बत यथा जाता जगद्व्यापिनी
चेतः कस्य चमत्करोति विभुतास्फूर्तिर्महिम्नश्च न ॥ ४ ॥
कल्पक्षोणिरुहो न यत्र मणयो नो कामकुम्भाः फलं
यच्छन्ति प्रहतानुभावनिवहा देवा न सेवाकृताम् ।
देवाभङ्गुरजागरूकमहिमाकाले कराले कलौ
जीरापल्लिजिनेश तत्र नमतां दत्से मनोवाञ्छितम् ॥५॥
न ध्यातैर्जिनमन्त्रतन्त्रनिकरैर्नो देवताराधनै-
र्नो विद्याभिरुपासिताभिरनिशं नो विक्रमोपक्रमैः ।
तीव्रैर्नापि तपोभिरीश यदनुष्ठानैर्न चावाप्यते
सन्तस्तत्तव नाममात्रजपतोऽभीष्टं लभन्ते फलम् ॥६॥
देव त्वत्पदवन्दनैकमनसामेकाकिनामङ्गिनां
मार्गे संसरतां हरन्ति विषमे क्रूरा न चौरा धनम् ।
दुष्टाकूतभृतोऽप्यटन्ति निकटे व्याघ्रा न शीघ्रागमा
यत्तत्पार्श्व तव प्रतापमहिमा प्रोज्जागरो जृम्भते ॥ ७ ॥

कासश्वासशिरोर्त्तिकुष्ठपिटकश्लेष्मोरुकण्डूज्वरो-
दावर्त्तक्षयशोफमण्डलमुखैरोगैरलं पीडिताः ।
देव त्वच्चरणाम्बुजन्मशरणं प्राप्ताः प्रतिज्ञान्विता
ध्वस्ताशेषरुजाव्रजा हि मनुजाः सज्जा भवन्त्यञ्जसा ॥८।
निःसत्वव्यसनौघविघ्नविषमव्याधिव्यथाविह्वला
विश्वाधीश तव प्रसादवशतो निर्मन्तवो जन्तवः ।
वेगादेव गताखिलानभिमता वीतापदः सम्पदः
सद्यः स्युः प्रतिपद्य हृद्यमुदयं चानन्दमेदस्विनः ॥९॥
लक्ष्मीराज्यभिलाषिणोऽधिकरमां भोगान् सुभोगार्थिनः
पुत्रान् पुत्रकृतस्पृहा बहुगजं राज्यं च राज्यच्युताः ।
नेतश्चक्षुरचक्षुषो निरुपमं रूपं कुरूपा नरा-
स्त्वत्तः स्तुत्यकलाः कलापविकला दिव्यं बलं दुर्बलाः।१०
नव्यां काव्यकलां सदाऽप्यकवयोऽजल्पाश्च जल्पाकतां
प्रागल्भ्यं भृशमप्रगल्भमनसो विद्यामविद्यान्विताः ।
तत्त्वज्ञानमतात्त्विका यदखिलाभीष्टं लभन्ते ततो-
देवः कामिततीर्थमित्थमखिले ख्यातं गतो भूतले॥११॥

नाथ त्वत्पदपद्मयोर्नतिमतां बाधाविधानाय नो-
भूतप्रेतपिशाचकिन्नरगणा रक्षो न यक्षोरगाः ।
व्याला हालहलानला न मरको वेतालमालाः खला
भव्यानां प्रभवन्ति कार्मणमुखक्षुद्रामयोपद्रवाः॥१२॥
ध्यायन्तस्तव नाममन्त्रमनघं क्षेमादविघ्ना जना-
लब्धार्था विषमे जलस्थलपथे गेहे समाजं कृच्छति ।
नासत्यं शपथं प्रतापचकिताः कुर्वन्ति दिव्यं नरा-
दुष्टा धृष्टहृदोऽपि चौरचरटा भञ्जन्ति नाज्ञां तव ॥१३॥
विघ्नध्वंसकृतैः खलास्त्वपि पलायन्ते प्रतापानल-
ज्वालाभिर्ज्वलिता दिशोदिशमिलापालाः शृगाला इव ।
दुष्टा धृष्टहृदो हठादपि लुठन्त्यंह्रौ तथा त्वाञ्जसा
वादे वैरिगणे महारणभरे नेतर्लभन्ते जयम् ॥ १४ ॥
प्राकाम्यं महिमाऽणिमा च लघिमा कामावसायित्वयुक्
प्राप्तीशत्ववशत्वमेवमतुला अष्टौ महासिद्धयः ।
त्वत्पादाब्जजुषां भवन्ति भविनां किंवा न सम्पद्यते
प्राप्ते कल्पतरौ जिनेप्सिततातिप्रत्यर्पणप्रत्यले ॥ १५ ॥

मोहं द्रोहपरं निवारयतमां मारिं महारिं हर
क्रोधं रोधपरं न योधय विभो क्षोभं च लोभं नय ।
दम्भं देव निशुम्भ लम्भय भयं ध्वंसं शुचं संहर
स्तम्भं स्तम्भय मे मथान कुनयं मिथ्यात्वदोषाद्विषम् १६
पूर्वोपात्तमघं विघट्टय विभो भ्रान्तिं प्रभो भ्रंशय
विश्वध्वंसकतामकान्तविपदं मादं प्रमादं क्षिप ।
अज्ञानं विनिवर्तयेरविरतं त्वं त्याजयासंमतं
प्रत्यादेशय पेशलेतरपथप्रस्थानमन्तर्द्धय ॥ १७ ॥
स्वामुज्जृम्भय भूरिभक्तिमनिभां बोधिं विशोधिं नय
स्वान्ते सीमशमं निवेशय विभो पुण्यां निजाज्ञां च मे।
दैन्यं मर्दय संविदं विशदयानन्दं प्रयच्छोन्मदं
सम्यग्दर्शनदर्पणं विदलितार्कद्योतमुद्योतय ॥१८॥
धर्मे निश्चलतामवापय भवच्छेदं दिश च्छेकता-
मर्थित्वं सुकृतेषु मेऽतनु सृज श्रेयस्ततिं विस्तृताम् ।
संवेगे दृढरङ्गमङ्गय मनो नीरागतासङ्गतिं
तन्या नाथ तथा रतिं जिनमते कुर्याः सुमार्गे धृतिम् १९

लक्ष्म्याकर्षणशृङ्खला शिवपदप्रासादनिःश्रेणिका
श्रेयःसन्ततिहेतुरर्त्तिदलनाऽदोषोदयार्कद्युतिः ।
आपत्तापभरे समीरलहरी श्रीपार्श्व विश्वेश ते
संसारार्णवलङ्घने घनतरी भक्तिः स्थिरा मे हृदि ॥२०॥
मिथ्यात्वद्विषताकदर्थितमिमं दुष्कर्मभिर्दुःखितं
ग्रस्तं रागमहोरगेण विषयस्तेनोत्कटैर्लुण्टितम् ।
अज्ञानेन वृतं तमःकवचितं भावारिभिर्भीषितं
हीनं दीनमुपागतं स्वशरणं मां रक्ष २ प्रभो ॥ २१ ॥
द्रष्टव्यस्त्वमसि प्रभो त्रिभुवने वन्द्योऽभिवन्द्यस्तुतः
सेव्यः स्तुत्यगुणः शरण्यचरणो ध्येयो निधेयो हृदि ।
श्रेयःस्थेयमतिः प्रशस्यमहिमानेयो न नेयोऽर्थिना-
मभ्यर्थ्यः प्रभुरद्भुतोदयपदं श्रीदेव नन्द्याश्चिरम्॥२२॥
इत्यानन्दवशंवदात्मनसा प्रज्ञां विनाऽपि स्तुतः
श्रीपार्श्व श्रितभव्यवत्सलमतिः सद्यः प्रभो ............
भक्तिं निर्मलसोमसुन्दरगुणश्रेणीसखीशालिनीं
स्वां भृत्यस्य भवे भवेऽभ्युदयिनीं देवेच्छतो यच्छ मे॥२३॥

इति श्रीजिनसुन्दरसूरिकृतं श्रीपार्श्वनाथस्तवनम् ।

॥ अर्हम् ॥

# श्रीजिनसुन्दरसूरिकृतः

# श्रीऋषभस्तवः।

श्रेयोलतापल्लवनैकनीरदं
त्वां देहिनां देव भवाब्धितीरदम् ।
आदिप्रभो भक्तिभरेण भूरिणा
स्तवीमि सेव्यं पुरहूतसूरिणा ॥ १ ॥

मूर्त्तिस्तवेनेन्दुकलाविलासिनी
विलासिनी मुक्तकुमुन्महोदयम् ।
महोदयं वादिशते वितन्वती
वितन्वती वा शुभमत्र पावनी ॥ २ ॥

त्रपावनीमापितवान् हिमालयं
हिमालयं शुभ्रयशोवितानतः ।
वितानतः स्वर्गिगणिः कलाधरः
कलाधरस्तारय मां भवापदः ॥ ३ ॥

भवापद प्राणिहितासदाऽऽपदां
सदा पदाम्भोजनमज्जरामरः ।
ज्जरामरस्यालकदुःखतापनः
खतापनः शर्मकजप्रबोधने ॥ ४ ॥
प्रबोधनेतस्तव दीप्रशासनं
प्रशासनं प्राप्य कुवादिनोदयम् ।
दिनोदयं मोहनिशि प्रभो भवं
प्रभोऽभवं सिद्धसमाहितोऽधुना ॥ ५ ॥
हितोधुनानो जगतो दुरापदं
दुरापदम्भद्विषतो विमोहन ।
विमोहनम्रामर हे विभो भवे
विभो भवेन्मे शरणं सदा भवान् ॥ ६ ॥
सदा भवान्ताहितशंमयाऽमुना
मयाऽमुना त्वं स्तुतिमापितः प्रगे ।
पितः प्रगेयोरुगुणैरमाम मा
रमा ममाधेहि महोदयोद्भवाः ॥ ७ ।
इति श्रीऋषभस्तवः समाप्तः ।

---

॥ अर्हम् ॥

सर्वज्ञ सर्वामरराजपूजितं
त्रिलोकनेत्राम्बुरुहेष्वहर्पतिम् ।
अगण्यपुण्योदयहेतुदर्शनं
त्वां स्तौमि भक्त्याऽस्तकुवादिदर्शनम् ॥१॥

जगत्त्रयीवर्त्ति ..........हृच्चतु-
स्त्रिंशद्विशिष्टातिशयैरलङ्कृता ।
मूर्त्तिर्विशां भाविसमृद्धिशंसिनी
पुण्यस्पृशां याति तवेश दृक्पथम् ॥ २ ॥

भवत्क्रमालोकनकर्मकार्मण-
प्रयोगतो यः सुभगत्वमश्नुते ।
तमुज्वलाऽऽलिङ्गति मङ्गलावलिः
पदं विदध्युर्विविधाश्च सम्पदः ॥ ३ ॥

जगन्मनोवृन्दविनोदमेदिनी-
स्वभावकर्मक्षयदेवसम्भवाम् ।
वितप्रातिहार्यातिशयश्रियं परां
समीक्ष्य साक्षाज्जिन को न मोदते ॥ ४ ॥

यं दातुमीशाः सुरमेदिनीरुहो
न कामकुम्भा नु न कामधेनवः ।
तस्योपलम्भे प्रतिभूर्भवन् भवान्
शुभोदयस्यास्ति विभो तदुत्तमः ॥ ५ ॥
जिन त्वदालोकनवन्दनोद्भवं
सुखं महत् स्वर्गसमृद्धिभोगतः ।
मन्ये यतोऽमी तदतुच्छवाञ्छया·
सुधाभुजोऽपि त्वदुपान्तमे(ए)यति ॥ ६ ॥
निरत्यया सा सुकृतस्य संहति-
र्जगत्पते स्फातिमियर्त्तु मेऽन्वहम् ।
प्रभुर्ययाऽनन्तगुणात्मवान् भवान्
विश्वैकबन्धुर्भगवन्नवाप्यते ॥ ७ ॥
इति स्तुतस्तीर्थपते प्रमोदतः
प्रसीद सद्यो जगदेकवत्सल
तथा यथा मे सकलर्द्धिसिद्धिदा
भवत्पदाम्भोरुहभृङ्गता भवेत् ॥
इति साधारणजिनस्तवः श्रीजिनसुन्दरसूरि

॥ अर्हम् ॥

जयश्रियां हेतुरमर्त्यपूजित
प्रज्ञातविज्ञेय वरेण्य वाङ्मय ।
जगद्गुरुर्गेयगुणौघगौरवः
सर्वज्ञ सर्वज्ञनमस्कृतक्रम ॥ १ ॥
विघ्नाग्निमेघ त्वममोघसंयमः
कृतार्थशक्तिः प्रकृतद्विषत्क्षयः ।
निस्सीमसाम्यः श्रितशीलसङ्गति-
र्लोकंपृणस्तीर्णतमोमहार्णवः ॥ २ ॥
चैत्यद्रुदिव्यध्वनिदेवदुन्दुभि-
च्छत्रत्रयीचामरपुष्पवर्षणैः ।
भामण्डलस्वर्णमयाऽऽसनान्वितैः
श्रीप्रातिहार्यैर्जयराजितो जिनः ॥ ३ ॥
नावृतज्ञानविशालदर्शनः
प्रकीर्णपुण्यश्रयणीयशासनः ।
महिम्नां महतां त्वमर्हतो

दृशा त्वया मां कुरु मुक्तकल्मषम् ॥ ४ ॥
अनुत्तरज्ञानधरस्तमोभर-
प्रभाकरः क्लेशहरः शिवङ्करः ।
सुखाकरः प्रौढतरः श्रितामरः
क्षिप्तस्मरः सिद्धिवरः श्रियम्भरः ॥ ५ ॥
परार्थवृत्तिः पृथुतत्त्वपद्धतिः
कृतेष्टपूर्त्तिः प्रथिताङ्गिसन्मतिः ।
सर्वज्ञ सर्वाभ्युदयैकहेतुना
स्वभक्तिदानेन सदा प्रसीद मे ॥ ६ ॥

इति सर्वसाधारणस्तवनं श्रीजिनसुन्दरसूरिविरचितम् ।

---

॥ अर्हम् ॥

नमः सर्वज्ञाय ।

श्रेयांसि विश्राणयितारमश्रमं
स्वामिन् श्रितानां श्रयणीयशासन ।
स्तुवन् भवन्तं भववैरिभञ्जनं
कुर्वे कृतार्थां स्वगिरं निरञ्जनम् ॥ १ ॥

विघ्नैः समं सङ्गमघस्य निघ्नतः
स्वदर्शनादेव नृदेवदुर्लभाः ।
सम्पादयन्नापदपेतसम्पद-
स्त्वमेकमित्रं जगतोऽपि वर्त्तसे ॥ २ ॥

मनीषिणः शैवसुखाभिलाषिणो-
भवन्तमेकं तदुपायमाश्रिताः ।
नेतर्यतो हेतुपथप्रवर्त्तने
फलस्य सिद्धिः सुलभेव भाविनाम् ॥ ३ ॥

सुनोषि सौख्यं विकृणोषि कल्मषं
करोषि लक्ष्मीं वितनोषि सन्मतिम् ।
धुनोषि दोषांश्च मनोषि विप्रियं
प्रभोऽङ्गिनां लोचनगोचरं गतः ॥ ४ ॥

स्वामीयति श्रेयसि शासकीयति
स्थामीयति स्वीयति सेवधीयति ।
गुरूयति स्वर्गितरूयति स्वरू-
पति द्विषामीश भवन्ति मार्यधीः ॥ ५ ॥

इति स्तुतेस्त्वं पथि संस्थितः कृतः
प्रसीद सीदत्तमसेवकस्वके ।
सद्बुद्धिबोधिस्वपदाब्जभृङ्गता-
मदोषतां चानु''''मय्यभीष्टव ॥ ६ ॥

इति सर्वजिनस्तवनं श्रीजिनसुन्दरसूरिकृतम् ॥

॥ अर्हम् ॥

## श्रीसोमतिलकसूरिविरचितं सर्वज्ञस्तोत्रम् ।

शुभभावानत स्तौमि सर्वज्ञ त्वां तमन्वहम्।
यो जिगाय भवान्मोहं सदानवसुराजितम्॥१॥

सह दानवैश्च ये सुरा देवास्तैराजितं यं मोहं तं भवान् विजिग्ये ॥ १ ॥

कस्य न स्यान्महानन्दः प्रभो त्वां वीक्ष्य विस्मयात्। अङ्घ्रिन्यासेन पद्मेषु सदानव-सुराजितम् ॥ २ ॥

पादन्यासेन नवसु सौवर्णकमलेषु शोभितम् ॥२॥

भवन्तं नौति यो भूरि भक्त्या तं नौति नित्यशः। विश्वमर्थितया नाथ सदानवसु-राजितम् ॥ ३ ॥

दानसहितं वसु धनं तद्रूपा राजिता लक्ष्मीर्यस्य ॥ ३ ॥

नाथ जन्ममहे विश्वसुखे त्वां वीक्ष्य मन्दरे। केनाऽऽमोदि खगेन द्युसदा न वसु-राजि तम् ॥ ४ ॥

विद्याधरेण देवेन च न आमोदि न हर्षितं अपि तु हर्षितमेव। किं विशिष्टे मेरौ स्वर्णरत्नशोभिनि तं त्वां वक्ष्यमाणम् ॥ ४ ॥

मया कल्मषमत्तालि पुण्यं चागण्यमर्जितम्। त्वां प्रतीक्षनिरीक्षाद्य सदाऽऽनव-सुराजितम् ॥ ५ ॥

सतः शिष्टान् आनयन्ति आश्वासयन्ति आह्लाद-

यन्तीति सदानाः । अनः श्वसक् प्राणने, "कर्म्मणो ऽण्" ॥५।१।७२॥ इति वचनात् । सदानाश्च ता वसुराजयो वपुषः किरणश्रेणयस्ताः तनोषि विस्तारयासि ॥ ५ ॥

**अद्य देव जगज्जैत्रं भाववैरिबलं मया ।**
**भवत्यालोकिते श्रेयोऽसदानवसुरा जितम् ६॥**

दानी खण्डने इति धातुना सह दानेन सदाना न सदाना असदाना अखण्डा श्रेयांस्येव असदानाश्च ते वसवो वृक्षाश्च तत्पल्लवनाय रा मेघाः । राः स्वर्णे जलदे धनदे इति प्रामाण्यात् । जितमिति क्रिया । यद्भाववैरिबलं मया जितम् ॥ ६ ॥

**न के जिन निगृह्णन्ति कामाख्यं विश्वमोहिनम् । त्वय्याश्रिते शुभोदर्के सदाऽऽनवसुराजितम् ॥ ७ ॥**

शुभोदर्के शुभफलप्रधान आ सामस्त्येन नवस्तवो यस्य त्वयि सुराजि सुस्वामिनि आश्रिते सति कामना-

मकं चौरं तम्। जाने तस्करक्रोडपुच्छपोऽतस्ता पुनः श्रियामिति वचनात् ॥ ७ ॥

**मदं वर्द्धयते तत्त्वमूढताऽऽशु तथाऽङ्गिनाम्।**
**यथा पीतेश चैतन्यासदा नवसुराजितम्॥८॥**

अदाना सती चैतन्यनिरासदायिनी मदिराऽऽजिः कलहं ततो तुस ह्रस ह्लस शब्दे इति धातुना आजिं कलहं तोसतीति शब्दयतीति आजितम् ॥ ८ ॥

**कचटतपनतेजः पञ्चमुष्ट्युद्धृतोद्यत्**
**कच टतपसमानः प्रौढपापौघपङ्के।**
**कचटतपकरस्त्वं देव रागादिदस्यून्**
**कचटतपसुरेन्द्रैर्वन्द्यपादारविन्दः ॥ ९ ॥**

कच बधान द्वितीयपदादौ क्रियेयम्। ललाटंतप सूर्य प्रताप। कचट केशकलाप। ट उपलेपकलापसीमासु इति वचनात्। तपसमः ग्रीष्मतुल्यः। कः सूर्यश्चश्चन्द्रः टतपाः राजानः, तपि ऐश्वर्य्ये, टि पृथिव्यां तपतीति एभिः सुरेन्द्रैश्च ॥ ९ ॥

एवं श्रीजिनपुङ्गवं शमरमारम्यं विशालच्छविं, राकासोमसमास्यमुत्तमगुणं सन्नम्रनाकप्रभुम् । सिंहं मन्मथमत्तदन्तिमथने श्रेयःसरस्सूरविं, यस्तौति प्रयतोऽश्नुते स मतिमानत्यन्तहारिश्रियम् ॥ १० ॥

इति श्रीसोमतिलकसूरिविरचितं सर्वज्ञस्तोत्रम् ॥

स्वनाम दर्शयन्नाह । एवं श्रीजिनपुङ्गवमित्यादि श्लोकेन सम्बन्धः ॥ १० ॥

इति सर्वज्ञस्तोत्रावचूरिः संपूर्णा ।



॥ अर्हम् ॥

## श्रीपार्श्वजिनाष्टकम् ।

लक्ष्मीर्महस्तुल्य सती सती सती
प्रवृद्धकालोविरतो रतो रतो ।
जरारुजापन्महताऽहता हता
पार्श्वे फणे रामगिरौ गिरौ गिरौ ॥ १ ॥

लक्ष्मी इत्यादि। हे मित्र पार्श्वं फण गच्छ। तत्र यात्रां कुरु, इ इति सम्बोधने। क रामगिरौ रामगिरिनामपर्वते कथंभूतस्त्वं गिरि उपलक्षितः उ इति निश्चये अव्ययानामसंख्यार्थत्वात् एतावति कृते किं स्यात् जरारुजा आपत् त्वया हता किं विशिष्टेन त्वया महता किंभूता जरा रुजा आपत् अहता पूर्वं अविनाशिता किं विशिष्टस्त्वं प्रवृद्धकालः प्रवृद्धके सुखे आल उद्यमो यस्य सः पुनः किं विशिष्टः विविरतः सर्वविरतः अरतोरतः

अरतं ब्रह्मचर्यं तस्य उ रक्षा तत्र रतः। हे पुरुषलक्ष्मीः सति पुरुषे, सती उत्तमा भवति। हे महस्तुत्य उत्सववर्णनीय किं० लक्ष्मीः सती उत्तमा स्वरूपेण, ई इति सम्बोधने तस्माद्वाचो लक्ष्म्याश्च फलं जिघृक्षुः श्रीपार्श्वयात्रां रामगिरौ कुरु इति सम्बन्धः॥ १॥

**अर्चेयमाद्यं भुवि नाविना विना**
**यत्सर्वदेशे सुमना मनामना।**
**समस्तविज्ञानमयो मयो मयो**
**पार्श्वे फणे रामगिरौ गिरौ गिरौ॥२॥**

अर्चेयमित्यादि। आद्यं पार्श्वं अर्चेयं क्व भुवि पृथिव्यां नावि नं ज्ञानं एकाक्षरनाममालायां नं ज्ञानं अवतीत्येवंशीलः सचासौ ना च एवं विधोऽहं। किं० अहं पुनः विना विशिष्टपुरुषः सर्वविरतत्वात् यद्यस्मात्कारणात् अहं सर्वदेशे सुमनाः प्रसन्नहृदयः किं० मनामनाः मन्यन्ते जानन्तीति मना विद्वांसस्तेषां अमः गमनं तेन उपलक्षितो ना किं० पुनः अहं समस्तविज्ञानमयः सम-

स्तं सम्यक् निराकृतं विज्ञानं येन सः समस्ताविज्ञानः नास्तिकः तं मिनाति हिनस्तीति समस्तविज्ञानमयः अच् लिहादिभ्यश्च पुनः किं० मया उपलक्षितः सम्यक्त्त-लक्षणया श्रिया उपलक्षितः पुनः किं० उमयः ऊ जीव-रक्षा तन्मयः सकृपः कर्मधारय०। अ इति सम्बोधने हे मित्र पार्श्व फण इत्यादि तदेव ॥२॥

अज्ञानसत्कामलतालतालता
यदीयसद्भावनता नता नता ।
निर्वाणसौख्यं सुगतागता गता
पार्श्वं फणे रामगिरौ गिरौ गिरौ ॥ ३ ॥

यदीयसद्भावनता यस्य पार्श्वस्य सद्भावेन योगलक्ष-णेन सती अज्ञानसत्कामलता कोऽर्थः मलो रागादिः तस्य तालः प्रतिष्ठा, तलण् प्रतिष्ठायां, चिरस्थायित्वं ता-तालयोरैक्यं ता तलण् आघाते तालयोरैक्यं तालय-तीति तालः माराङ्कस्तस्य भावः मलतालता रागद्वेषा-दीनां प्रतिष्ठा तथा माराङ्कता नता नम्रजाता तथा भव्या-

नुद्दिश्य हे सुगताः सुज्ञानाः पुमांसः यस्य प्रसादात् निर्वाणसौख्यं गताः सुगतागतः अः कृष्णो यस्मात् तस्य संबोधनं हे कृष्णभक्तिवर्जित पार्श्व फणेत्यादि प्राग्वत्, अविशेषेण ज्ञातव्यम् ॥ ३ ॥

**व्यनेष्ट जन्तोः शरणं रणं रणं**
**क्षमादितो यः कमठं मठं मठम्।**
**नरामराऽऽरामक्रमं क्रमं क्रमं**
**पार्श्व फणे रामगिरौ गिरौ गिरौ॥४॥**

व्यनेष्ट इत्यादि । यः पार्श्वः जन्तोः प्राणिनः शरणं तथा यः पार्श्वः रणं संग्रामं व्यनेष्ट व्यपाजीगमत् तथा च रणं भाषणं व्यनेष्ट छद्मस्थावस्थायां यो भगवान् कमठं व्यनेष्ट किं० भगवान् क्षमादितः क्षमा अदन्त्येवंशीलाः कोपना ये तान् तस्यति उपक्षिणोति यः क्षमापरे हि क्रोधनाः स्वयमेवोपशाम्यन्ति किं० कमठं मठं मठं अटन्तं इत्याध्याहारः ऋषित्वाद्धि स्थाने २ मठेष्ववस्थात् पुनः किं० कमठं नरामरा क्रमं नरप्रधाना अमरप्रधानाश्च ये

आरामास्तेषु क्रामतीति अच् लिहादिभ्यश्च तथा हे मित्र त्वं पार्श्वे गच्छन् क्रमंक्रमं फण गच्छ अयतनापरत्वेन यात्रां मा विधाः इर्यासमितेर्भावयात्रात्वात् ॥४॥

यद्विश्वलोकैकगुरुं गुरुं गुरुं
विराजिताये न वरं वरं वरम् ।
तमालनीलाङ्गभरं भरं भरं
पार्श्वे फण रामगिरौ गिरौ गिरौ ॥५॥

यद्विश्वेत्यादि। यद्यस्मात्कारणात् विश्वलोकगुरुं तथाऽसमत्वादलघुं गुरुं गुरुर्वक्रो भवति स्वाम्यपि कर्मारीन् प्रति वक्रः ततो गुरुं अहं अये गच्छामि सेवे न वरं उत्तमं वृंगट् वरणे वृणोतीति मुक्तिश्रियं इति वरः तं अये भवदपेक्षया आचार्यत्वात् उत्तमोऽहं सेवे तस्मात्त्वं पार्श्वे फण गच्छ इति प्रस्तुते योज्यं हे विराजित लोकेषु तैस्तैर्गुणैः शोभित किं० पार्श्वं तमालनीलाङ्गभरं, तथा भरं दशविधधर्म्मस्य पोषकं, अच् लिहादिभ्यः तथा भरं भरति भुवनं गुणैर्भरः, अच्प्रत्ययः ॥ ५ ॥

विवादिसाशेषविधिर्विधिर्विधि-
र्बभूव सर्पावहरीहरीहरी ।
त्रिज्ञानसंज्ञानमयोमयोमयो
पार्श्वे फणे रामगिरौ गिरौ गिरौ॥६॥

विवादिसेत्यादि। पार्श्वे फणे इत्यादि प्राग्वत् पार्श्वे फण-गच्छ इत्यादि न विस्मार्यम्। विवादिसाशेषविधिः विवादिनां परतीर्थ्यानां या सा लक्ष्मीस्तस्याः शेषस्य शेषमात्रस्य विधिः स्रष्टा परतीर्थिकातिशयस्वल्पीकरणक्षमः पुनः किं० विधिः साक्षादाचाररूपः अचारो हि जिनपतिदर्शित एव लभ्यते पुनः किं० विधिः धिंत् धारणे तुदादिः विगतो धिर्धारणं परिग्रहग्रहो यस्य पार्श्वस्य स विधिः तथा यः पार्श्वः सर्पावहरी हरी बभूव । सर्पं अवतीति सर्पावः सर्पो हि कमठहठाग्निदंदह्यमानो भगवता उद्धार्य नमस्कारदाने पुण्येन धरणेन्द्रत्वं लंभितः हरीणामिन्द्राणां ईर्लक्ष्मीः तथा हरीणां सिंहानां या लक्ष्मीः पराक्रम इति

लक्षणा, तां हन्ति यः कालः तस्मिन्नपि रीयते प्रतिमल्लतया गच्छति यः मृत्युजेतृत्वात् सर्पाविश्चासौ हरी हरी हरीति कर्म्मधारयः यो भगवान् पार्श्वः त्रिज्ञानसंज्ञानमयः उत्पत्तेरारभ्य त्रिज्ञानः पश्चात्संज्ञानमयः कोऽर्थः चरित्रे मनपर्यवज्ञानी पश्चात्तु केवलज्ञानी मयोमयो लक्ष्म्या मया उपलक्षितः पुनः किं० उमयः अवनं ऊः जीवरक्षा तन्मयः तं पार्श्वं फण ॥ ६ ॥

संरक्षतो दिग्भवनं वनं वनं
विराजिता येषु दिवैदिवैदिवे ।
पादद्वये नूतसुरासुराऽऽसुराः
पार्श्वं फणे रामगिरौ गिरौ गिरौ ॥७॥

संरक्षतोदिगित्यादि । पार्श्वं फणेत्यादि जातम् । नूतसुरासुराः कोऽर्थः नूता लोके स्तुताः प्रशम्या ये सुरा २ स्तथा आसुराः हिंसकाः क्रूराः महाराजादय अस्य पादद्वये विराजिताः शोभन्ते स्म यस्य किं कुर्वतः दिग्भवनं संरक्ष-

तः दिशश्च ऊर्द्धलोकरूपा भुवनं जगत्त्रयं संसारता तथा वनं पानीयं रक्षतः प्राशकोदकपायित्वात् तथा वनं वृक्षादिरूपं रक्षतः वनस्पतिकाये ये विराधनाः परिहारितास्ते येन इः कामः ऐत् इव आगच्छदिव वै निश्चितं दिवा क्रीडयेत्याह येषु दिवै दिवै, येषु नूतसुरासुरेषु दिवा आकाशमार्गेण आ इति या क्रीडा रसरभसेन तथा इः कामः। येषु ऐदिव आगच्छदिव। को भावः येषां दैवदैत्यानां लीलालालित्यं पश्यतां जनानां अयं परामर्शो भवति। किं० एषु अतिशयेन इः कामः दिवा क्रीडया ऐत् आगच्छत् तथा दिवा नभसा ऐत् आगच्छत्, पार्श्वं फण गच्छ ॥ ७ ॥

रराज नित्यं सकलाकलाऽकला-
ममार कृष्णोऽत्वजिनो जिनो जिनोः ।
सहारपूज्यं वृषभासभासभाऽऽ
पार्श्वे फणे रामगिरौ गिरौ गिरौ॥८॥

रराजेत्यादि। हे मित्र त्वं पार्श्वं फणेत्यादि प्राग्वत् । किं० सहारपूज्यं सह हारैर्वर्त्तन्ते सहाराः श्रीमन्तो देवनरदेवादयः तैः पूज्यं हे वृषभासभासभ वृषेण अनुडुहा भासते वृषभासो रुद्रः तद्वद्दीप्यते भा कान्तिर्यस्य हे वृषभासभासभ। आ अतिशयेन उत्तरार्द्धगतो यो भगवान् स नित्यं रराज किं० भगवान् पार्श्वः। अमारकृष्णः सुगमम्। सकलकलाकंलाम्। सकलः स प्रभावः, अकलो रागद्वेषादिकलामुक्तः, अकं दुःखं कुष्ठादिप्रभावं लान्तीति अकलाः तानामयति "अम द्रम हम्म गतौ" आत्मपार्श्वं गमयति य अनन्तात् क्विप् सकलश्चासावकलश्चेत्यादिकर्म्मधारयः। किं विशिष्टः भगवान् अवृजिनो निष्पापः । पुनः किं विशिष्टः भगवान् जिनस्तीर्थकृत्, पुनः किं विशिष्टो भगवान् जिनोः जिनं कृष्णमप्यवति रक्षति जिनोः शंखेश्वरसैन्यमरकं श्रीशङ्खेश्वरपार्श्वस्नपनजलाभिषेकेन न्यषेधत् ततश्च जिनः कृष्णो जयः श्रीमान् पार्श्वो ररक्ष इत्यादि ॥ ८ ॥

तर्के व्याकरणे च नाटकचये काव्याकुले कौशले, विख्यातो भुवि पद्मनन्दिमुनिपस्तत्त्वस्य कोशं निधिः । गम्भीरं यमकाष्टकं भणति यः शम्भूयसा लभ्यते, श्रीपद्मप्रभदेवनिर्मितमिदं स्तोत्रं जगन्मङ्गलम् ॥९॥

इति पार्श्वजिनाष्टकम् ॥

अथ नामकं दर्शयन् सन् तर्केति श्लोकेनाऽऽह ॥ ९॥

अथ टीकाकारः स्वनामकमनुष्टुपेनाऽऽह ।

श्रीराजशेखरगुरोश्चातुर्विद्योपजीविकः ।
अत्र स्तवे व्यधाट्टीकां सूरिः श्रीमुनिशेखरः ॥ १ ॥

इति श्रीपार्श्वनाथस्तवनावचूर्णिः समाप्ता ।

॥ अर्हम् ॥

## श्रीगौतमाष्टकम् ।

श्रीइन्द्रभूतिं वसुभूतिपुत्रं
पृथ्वीभवं गौतमगोत्ररत्नम् ।
स्तुवन्ति देवासुरमानवेन्द्राः
स.गौतमो यच्छतु वाञ्छितं मे ॥ १ ॥

श्रीवर्द्धमानात् त्रिपदीमवाप्य
मुहूर्त्तमात्रेण कृतानि येन ।
अङ्गानि पूर्वाणि चतुर्दशापि
स गौतमो यच्छतु वाञ्छितं मे ॥ २ ॥

श्रीविरिनाथेन पुरा प्रणीतं
मन्त्रं महानन्दसुखाय यस्य ।
ध्यायन्त्यमी सूरिवराः समग्राः
स गौतमो यच्छतु वाञ्छितं मे ॥ ३ ॥

यस्याभिधानं मुनयोऽपि सर्वे
गृह्णन्ति भिक्षाभ्रमणस्य काले ।

मिष्टान्नपानाम्बरपूर्णकामाः
स गौतमो यच्छतु वाञ्छितं मे ॥ ४ ॥
अष्टापदाद्रौ गगने स्वशक्त्या
ययौ जिनानां पदवन्दनाय।
निशम्य तीर्थातिशयं सुरेभ्यः
स गौतमो यच्छतु वाञ्छितं मे ॥ ५ ॥
त्रिपञ्चसंख्याशततापसानां
तपःकृशानामपुनर्भवाय।
अक्षीणलब्ध्या परमान्नदाता
स गौतमो यच्छतु वाञ्छितं मे ॥ ६ ॥
सदक्षिणं भोजनमेव देयं
साधर्मिकं सङ्घसपर्य्ययेव।
कैवल्यवस्त्रं प्रददौ मुनीनां
स गौतमो यच्छतु वाञ्छितं मे ॥ ७ ॥
शिवं गते भर्तरि वीरनाथे
युगप्रधानत्वमिहैव मत्वा।

पट्टाभिषेको विदधे सुरेन्द्रैः

स गौतमो यच्छतु वाञ्छितं मे ॥ ८ ॥

श्रीगौतमस्याष्टकमादरेण प्रबोधकाले मुनिपुङ्गवा ये ।
पठन्ति ते सूरिपदं च देवानन्दं लभन्ते नितरां क्रमेण ॥९॥

इति श्रीगौतमाष्टकं समाप्तम् ।

---

॥ अर्हम् ॥

श्रीवीतरागभगवंस्तवसमयालोकनं विनाऽभूवन् ।
द्रव्ये क्षेत्रे काले भावे मे पुद्गलावर्त्ताः ॥ १ ॥
मोहप्ररोहरोहान्नट इव भवरङ्गसङ्गतः स्वामिन् ।
कालमनन्तानन्तं भ्रान्तः षट्कायकृतकायः ॥ २ ॥
औदारिकवैक्रियतैजसभाषाप्राणचित्तकर्म्मतया ।
सर्वाणुपरिणतैर्म्मे स्थूलोऽभूत्पुद्गलावर्त्तः ॥ ३ ॥
तत्सप्तकैककेन च समस्तपरमाणुपरिणतेर्यस्य ।
संसारे संसरतः सूक्ष्मो मे जिन तदावर्त्तः ॥ ४ ॥
निःशेषलोकदेशान् भवे भवे पूर्वसम्भवैर्मरणैः ।

स्पृशतः क्रमोक्रमाभ्यां क्षेत्रे स्थूलस्तदावर्त्तः ॥ ५ ॥
प्राग् मृत्युभिः क्रमेण च लोकाकाशः प्रदेशसंस्पृशतः ।
मम यो जिन सर्वः स्वाामिन् क्षेत्रे सूक्ष्मस्तदावर्त्तः ॥ ६ ॥
मम सकलकालसमयान् संस्पृशतोऽतीतमृत्युभिर्नाथ ।
अक्रमतः क्रमतश्च स्थूलः काले तदावर्त्तः ॥ ७ ॥
क्रमणस्थानेव समान् प्राग्भूतैर्मृत्युभिः प्रभूतैर्मे ।
संस्पृशतः सूक्ष्मोऽर्हन् कालगतः पुद्गलावर्त्तः ॥ ८ ॥
अनुभागबन्धहेतून् सङ्ख्यालोकाप्रदेशपरिसङ्ख्यान् ।
मृयतः क्रमोत्क्रमाभ्यां भावे स्थूलस्तदावर्त्तः ॥ ९ ॥
प्राग् मरणैः सर्वेषामभितेषां यः क्रमेण संक्लेशः ।
भावे सूक्ष्मः सोऽभूज्जिनेश विश्वत्रयाधीश ॥१०॥

नानापुद्गलपुद्गलावलिपरावर्त्तानन्तामहं
पूरं पूरमियच्चिरात्कियदिशं बाढं दृढं नोढवान् ।
दृष्टादृष्टचरं भवन्तमधुना भक्त्याऽर्थयामि प्रभो
तस्मान्मोचय रोचय स्वचरणं श्रेयः श्रियं प्रापय ॥११॥

इति पुद्गलसङ्ख्यास्तवनं समाप्तम् ।

—— ० ——

॥ अर्हम् ॥

# श्रीमुनिसुन्दरसूरिविरचितः श्रीजिनस्तोत्ररत्नकोशः ।

जयश्रियं ज्ञानतपस्क्रियायुधै-
रवाप्य दुर्वारतरान्तराद्विषाम् ।
पदं यदाऽऽपुः किल ये तदाप्तये
जिनांश्चतुर्विंशतिमानुवामि तान् ॥ १ ॥

श्रीमानादिविभुः क्षमाधरकुले जातः सुवंशावली-
ष्वाद्यो मौक्तिकसंपदेऽस्तु स सतां शाखाशतभ्राजितः ।
धर्मादिस्थितियष्टयो यदुदिताः स्फूर्जत्प्रभावाः सदाऽ
भूवन् मोहजनार्दितस्य जगतोऽप्याधारभूताः पराः ॥२॥

ईशानः पुरुषोत्तमो जिनपतिर्ब्रह्मेति मुक्त्यर्थिभिः
कल्पद्रुर्मरुतां घटः सुरमणिश्चैवं धनाद्यर्थिभिः ।
बन्धुस्त्राणमयं पिताऽथ जननी चैवं हिताद्यर्थिभि-
र्यो ध्यातस्तनुतात् सुखाकृतजगज्जन्तुः श्रियं सोऽजितः॥३॥

श्रीशंभवः स जीयात् प्रापयितुं शिवपुरं जवाद्भव्यान् ।
बिभ्रत्सार्थाधिपतां धत्ते योऽङ्कच्छलादश्वम् ॥ ४ ॥

बध्नाति चेतांसि गुणैस्त्रिलोक्या मत्तोऽप्ययं जित्वरचापलानि ।
इतीव भीत्याऽङ्कनिभादुपास्ते यं वानरः पात्वभिनन्दनोऽयम् ५

कल्याणावलिमातनोतु भवतां निस्सीममाहात्म्यभृ-
द्देवानामपि देवता स सुमतिः श्रीतीर्थलक्ष्मीपतिः ।
रूपं यस्य हरिः क्षमो न दशभिश्चक्षुःशतैर्वीक्षितुं
विंशत्या रसनाशतैरपि धृतैर्वक्तुं गुणांश्चाहिराट् ॥ ६ ॥

त्यक्त्वा वारिरुहं जलाशयरतिं सेवां यदंह्रिस्फुर-
ल्लावण्यामृतपल्वलस्य कुरुते नित्यं यदङ्कच्छलात् ।
तत्पुण्येन लभेत तत्सुरनराधीशोत्तमाङ्गेष्ववं-
स्थानं मुक्तिपदप्रदोऽस्तु भवतां श्रीमान् स पद्मप्रभः॥७॥

स्फुरत्तरस्फारफणालिरूपिणीः,
रत्नांशुजालैर्दधदिद्धपल्लवाः ।
यः पञ्चशाखाः समभूत्सुरद्रुमः
स चिन्तितं रातु सुपार्श्वतीर्थकृत् ॥ ८ ॥

नैवामृतं प्रददद्प्यजरामरत्वदाने
क्षमोऽस्मि विभुरेष जिनास्त्विहापि ।
ध्यात्वेति यावत इवांह्रिगतोऽयमिन्दु-
स्तच्छक्तिमस्तु विधुलक्ष्मजिनः स भूत्यै ॥९॥

देवानामवधिः स्फुरद्गुणनिधिः शुष्यद्भवाम्भोनिधि-
र्दुष्कर्मारिप्रधिर्जने हितविधिर्द्वेधा विमुक्तोपाधिः ।
पातु श्रीसुविधिः सुरैर्वरविधिस्तुत्यप्रभावोदधि-
र्येनोद्यत्सुखधिक्रियाकृदवधिक्रोधः सयोधो युधि॥१०॥

नरामरा बिभ्रति भृङ्गभूयं
यस्मिन् सदा योगिमनस्सरःस्थे ।
तनोत्वयं शीतलपादपद्मः
संसारतापप्रचयप्रणाशम् ॥ ११ ॥

श्रेयःश्रेणिमयं तनोतु भगवान् निश्रेयसश्रीप्रभु-
र्निर्विश्रामसुरेशसंस्तुतपदः श्रेयांसनामा जिनः ।
संपत्कम्पपराङ्मुखा त्रिजगतो विश्रामभूश्चेतसां
यन्नामस्मृतिमात्रतोऽपि भाविनां पाणौ स्फुरत्यञ्जसा॥१२॥

सेवागतामरनरावलिपापवैरि-
प्रध्वंसनप्रगुणिता इव यस्य भान्ति ।
आग्नेयशस्त्रनिवहास्तनुकान्तिरूपाः
पायाद्भवात्स भवतः प्रभुवासुपूज्यः ॥ १३ ॥

को नार्य्या जनितो विनाऽपि हि पतिं कस्मिन् भवेच्चन्दनं
का मान्या गृहिणां स्फुटा यदभिधा प्रश्नादिवर्णैर्भवेत्।
कीदृग् ध्यानतपःश्रुतैर्जिनमतैः प्राणी भवत्यञ्जसे-
त्येवं च प्रतनोतु वः स भगवान्नामानुरूपां धियम् ॥१४॥

नेत्रश्रीर्जलराशिगूढविलसत्काम्यार्थरत्नोच्चयान्
योऽभूद्दर्शयितुं पुराऽत्र विबुधव्रातस्य धत्ते च यः ।
पृथ्वीं कीर्त्तिततिं, तथा सदऽमृतप्राप्तिर्यदाज्ञावशा,
पायाद्भोगिकुलोद्भवः सविशदः श्रीमाननन्तः प्रभुः ॥१५॥

मङ्गलं प्रवितनोतु भाविनां
धर्म्मतीर्थपतिरामरद्रुमः ।
यत्प्रसादमहिमाणुजृम्भितं
चक्रिशक्रशिवशर्मसम्पदः ॥ १६ ॥

चिरस्य पीतेन्दुसुधानुवादं
संवीक्षितुं यद्वचनामृतेन ।
सुधारुचेर्लक्ष्ममृगोऽङ्कदम्भा-
द्यं सेवते, शान्तिरयं शिवाय ॥ १७ ॥
यः सूरजातोऽपि हि जीवमैत्र्यभाग्
मेषाश्रितोऽप्याश्रयते महोच्चताम् ।
श्रीनन्दनश्चाप्यकरोद्भवक्षयं
स कुन्थुनाथः पृथुसंपदे सताम् ॥ १८ ॥
ध्वस्ताज्ञानभरः स्मरज्वरहरः सर्वेष्टसौख्याकरः
क्षीणाशेषदरः क्रमानतनरप्रेयःशिवश्रीकरः ।
ब्रह्माद्वैतधरः समाश्रितपरत्रैलोक्यरक्षाऽऽदरः
कुर्यात् श्रीमदरः सतां गुरुतरश्रेयांसि तीर्थङ्करः ॥१९॥
मल्लिर्जिनोऽसौ श्रियमातनोतु
श्रितः पदौ यस्य घटः सुराणाम् ।
अङ्कं मिषन् सर्वमनोव्यतीत-
प्रदानशक्तिं किल याचमानः ॥ २० ॥

पूर्वं कूर्मपतिश्चकार चलनोपास्तिं क्षमाभृद्गुरो-
र्यस्योद्धर्तुमिमां क्षमामभिलषंस्तच्छक्तिपाठाय नु ।
दृष्टश्चैष तथाकृतिष्वपि जनैश्चक्रे ऽधुनाऽपीक्ष्यते
श्रेयःश्रीमुनिसुव्रतः स तनुताद्वः कूर्मलक्ष्मा प्रभुः॥२१॥
स्थेयःश्रीभरदानशक्तिमतुलां यस्येक्षमाणं सदा
स्वस्मिंश्चापलपङ्कगर्हिततमां निन्दद्धसन्तीं रमाम् ।
स्थेष्ठां तां किल याचते पदयुगासेवाकृदङ्कच्छलात्
नीलाम्भोजमयं तनोतु भविनां मुक्तिश्रियं श्रीनमिः॥२२॥
विश्वाहङ्कारभारज्वरहरणमहाभेषजैः काममुख्यै-
र्योधैरुद्धोपकण्ठं सबलमपि चिरं मोहभूपं वसन्तम् ।
निर्धाट्याप्येक एवोत्कटभटमुकुटो यः प्रविश्यौग्रसेनी,
चित्तोर्वीराजधान्याः स्वयमुषित,इह श्रेयसे सोऽस्तु नेमिः २३
वितरतु भवतां श्रीपार्श्वनाथः स मुक्तिं
फणिपतिफणमालाश्लिष्टपादारविन्दः ।
कमठहठविमुक्ताऽवारवारिप्रवाहै-
रपि सपदि यदीयो दिद्युते ध्यानवह्निः ॥२४॥

यो वेदार्थविचारणायुधगणैर्हत्वा गणेशोल्लस-
न्मानप्रोन्नतचित्तदुर्गनिवहे संदेहशत्रून् स्थितान् ।
प्रागेव प्रहतस्य मोहनृपतेर्मल्लानिव प्रोन्मदान्
स्वान् सद्बोधनृपान् न्यवीविशदयं वः पातु वीरप्रभुः॥२५॥
एवं निर्णिक्तभक्त्या भरतभुवि चतुर्विंशतिर्वर्त्तमानाः
संसारक्लेशभीतात्रिभुवनजनतात्राणदुर्गोपमानाः ।
नूता मुग्धस्तवेन त्रिदशपतिनुतास्तीर्थराजा ददन्तां
तां शुद्धां बोधिलक्ष्मीं लसति मयि यतः केवलानन्दलीला२६
एवं यो मतिमान् स्तुते जिनवरान् भक्त्या चतुर्विंशतिं
शक्रालीमुनिसुन्दरस्तवगणैर्नूतक्रमाम्भोरुहान् ।
सर्वाभीष्टसुखोच्चयैरविरतं स्फूर्जत्प्रमोदाऽद्वयो
मोहद्वेषि जयश्रिया स लभते श्रेयोऽचिराच्छाश्वतम्॥२७॥

इति युगप्रधानावतारवृहत्तपागच्छाधिराजश्रीदेवसुन्दरसूरि-
श्रीज्ञानसागरसूरिश्रीसोमसुन्दरसूरिशिष्यैः श्रीमुनि-
सुन्दरसूरिभिर्विरचिते जयश्र्यङ्के श्रीजिनस्तोत्र-
रत्नकोशे प्रथमप्रस्तावे चतुर्विंशतिश्रीजिना-
शीर्वादरूपं स्तोत्ररत्नं प्रथमम् ।

॥ अर्हम् ॥

जयश्रियं प्राप्य कुकर्म्मविद्विषां
सङ्ख्याव्यतीता मुनयः समासदन्।
यस्मिन्महानन्दपदं नगोत्तमे
शत्रुञ्जयेऽस्मिन् जिनमादिमं स्तुवे ॥ १ ॥
प्रभूयते यत्र न वासवैरपि
स्तुतौ कुतस्तत्र मम प्रगल्भता।
तथापि नाभेय वदन्निमां तव
स्वशक्त्यशक्ती न विचारयाम्यहम् ॥ २ ॥
यतोऽर्चनं ते न न दर्शनं वा
न संस्तुतिर्वापि शिवस्य हेतुः।
किंत्वद्भुता भक्तिरियं तु मेऽस्ति
शक्तेः प्रवृत्त्यैव च सा कृतार्था ॥ ३ ॥
ततः स्वशक्तेरनुसारतोऽय-
मपि प्रवृत्तो भविता कृतार्थः।
न सत्क्रिया ते स्तुतितः परा य-

च्छिवाय लेशोऽपि च सत्क्रियायाः ॥ ४ ॥
पुराणमीशं परमार्थदेशकं
परात्मरूपं परमेष्ठिनां परम् ।
युगादिदेवं विमलाचले स्तुवन्
भवेत्त्रिलोक्याः स्तवनीयतापदम् ॥ ५ ॥
अनाद्यनन्तं मुनिभिः पुरातनै-
र्मितिव्यतीतैरभितः पवित्रितम् ।
यदेव तीर्थं भरतोत्तमं परं
शक्राय सीमन्धरतीर्थकृज्जगौ ॥ ६ ॥
सङ्घाऽधिपत्यं विधिवत्प्रपद्य
यस्मिन् युगादीशजिनं सुभावात् ।
प्रणम्य भव्यो जिननायकत्वा-
वधिप्रतिष्ठां लभते कृतार्थः ॥ ७ ॥
असङ्ख्यतीर्थेश्वरपादपूतं
सिद्धेः पथं मङ्गललक्ष्मिसद्म ।
समग्रपापक्षयकृत्प्रणौमि

शत्रुञ्जयाह्वं तदनादितीर्थम् ॥ ८ ॥
चिरादवाह्यं सुवहञ्चकार
कैवल्यमार्गं प्रथमं परं या ।
विश्वत्रयात्यद्भुतपुत्रऋद्ध्या
द्विधा महानन्दसुखं प्रपन्ना ॥ ९ ॥
शक्तिं परां तां परमात्मरूपा-
मरूपिणीं विष्टपकल्पवल्लीम् ।
अम्बां त्रिलोक्या मरुदेविनाम्नीं
युगादिनेतुर्जननीं प्रणौमि ॥ १० ॥
॥ युग्मम् ॥
अधर्म्मकालोरुनिदाघतापितं
जगत्सुखाकर्तुमिहोत्तरोन्नतिः ।
ववर्ष तत्त्वामृतपूरमादिमं
दयाम्बुधेरम्बुदवज्जगत्पतिः ॥ ११ ॥
कृत्वा कृतार्थानि जगन्ति यो विभु-
र्नीत्या पुमर्थत्रितयस्य शिक्षणात् ।

प्रसाधयामास चतुर्थमप्यमुं
महामुनिर्ज्ञानतपस्क्रियाफलम् ॥ १२ ॥
अतास्थपद्यस्य च शुद्धरत्नै-
र्विनिर्मितं लेप्यमयं च बिम्बम् ।
शैलेऽत्र चक्री भरतः स्तवीमि
तमादिमं तीर्थपतिं प्रणम्रः ॥ १३ ॥

॥ त्रिभिर्विशेषकम् ॥

यः पञ्चकोटीमितसाधुवृन्दैः
समन्वितः केवलबोधमाप्य ।
चैत्रस्य राकादिवसे प्रपन्नः
शिवश्रियं श्रीविमलाचले ऽत्र ॥ १४ ॥
आदिप्रभोरादिमपुत्रपुत्रं
गणाधिराजं प्रथमं प्रथाऽऽढ्यम् ।
जगत्प्रणम्यक्रमपुण्डरीकं
श्रीपुण्डरीकं मुनिमानमामि ॥ १५ ॥

॥ युग्मम् ॥

यस्मिन् युगादीशजिनं स्मरन्तः
स्वःशर्म भेजुः पशवोऽपि हिंस्राः ।
मयूरनागप्रमुखा भजे तत्
स्वपापपिष्ट्यै विमलाद्रितीर्थम् ॥ १६ ॥

इमं गरीयांसमपि क्षितिध्रं
भव्याङ्गिनः स्वे हृदये दधानाः ।
तरन्ति संसारमहोदधिं द्रा-
गहो अचिन्त्यो महतां प्रभावः ॥ १७ ॥

जलधिर्न यथा दवाग्निभि-
र्न तमोभिश्च दिनेशमण्डलम् ।
विमलाद्रिमुपागतो भवी
न तथा पापभरैः प्रलिप्यते ॥ १८ ॥

न भियो भवशत्रुसम्भवाः
खलु तस्य प्रभवान्ति भाविनः ।
विमलाचलमौलिमण्डनं

श्रयते यः शरणं जगत्प्रभुम् ॥ १९ ॥
तव नाथ गुणान्न कोऽप्यलं
गदितुं संसृतिपारदायिनः ।
तदपीष्टसुखाप्तिहेतुके
स्तवने ते रमतां मतिर्मम ॥ २० ॥
शस्यः क्षणोऽयं दिवसः कृतार्थः
श्लाघ्यः स पक्षः सफलश्च मासः ।
स हायनः पुण्यपदं जिनेन्द्र
यस्मिन् भवेद्वन्दनमङ्गलं ते ॥ २१ ॥
अभ्यर्थये तं दिवसं क्षणं वा
संसारवासं जगदेकनाथ ।
स्याद्यत्र सद्भक्तिरसोर्मिधौत-
स्त्वद्वन्दनानन्दमहोत्सवो मे ॥ २२ ॥
त्रिलोकपूज्यौ भवभीतजन्तु-
त्राणैकदुर्गौ सुलभापवर्गौ ।
जगत्त्रयीवाञ्छितकल्पवृक्षौ

पादौ जिनेन्द्रस्य मुदा प्रणौमि ॥ २३ ॥

इमं स्तुवे चैत्यतरुं प्रियालुं
सङ्घाधिपे दर्शितदुग्धवर्षम् ।
छायां सृजन् यो जिनपद्युगस्य
चिरं कृतां वक्त्यधुनाऽपि सेवाम् ॥ २४ ॥

श्रीमद्युगादीशपदाब्जभक्तः
श्रीसङ्घरक्षाकरणाभियुक्तः ।
सम्यग्दृशां मौलिमणिर्विमुद्रं
यक्षः कपर्दी वितनोतु भद्रम् ॥ २५ ॥

एवमानुतयुगादिजिन श्री-
देवसुन्दरतरान्तरभक्त्या ।
देहि बोधिकमलां विमलां मे
स्याद्यतः सकलवैरिजयश्रीः ॥ २६ ॥

एवं श्रीवृषभप्रभुं जिनवरं शत्रुञ्जयालङ्कृतिम्
शक्रालीमुनिसुन्दरस्तवगणैर्नूतक्रमं यः स्तुते ।
सर्वाभीष्टसुखोच्चयैरविरतं स्फूर्जत्प्रमोदाऽऽढ्यो-

मोहद्वेषि जयश्रिया स लभते श्रेयोऽचिराच्छाश्वतम्॥२७॥

इति युगप्रधानावतारबृहत्तपागच्छाधिराजश्रीदेवसुन्दरसूरि-
श्रीज्ञानसागरसूरिश्रीसोमसुन्दरसूरिशिष्यैः श्रीमुनि-
सुन्दरसूरिभिर्विरचिते जयश्र्यङ्के श्रीजिनस्तोत्र-
रत्नकोशे प्रथमप्रस्तावे श्रीशत्रुञ्जयमण्डनश्री-
आदिनाथस्तवरूपं स्तोत्ररत्नं द्वितीयम्।

॥ अर्हम् ॥

जयाश्रियं विश्वजितं स्मराद्विषं
पराभिभूयाजननादवाप यः।
श्रीनेमिनं तं सुरराजपूजितं
जगत्प्रभुं रैवतदैवतं स्तुवे ॥ १ ॥
स्तुतिं विधातुं तव यां न शक्तो
नेमे सुरेन्द्रोऽप्यहकं कथं ताम्।
तथापि तत्सम्भविसत्फलस्य
लिप्सैव मां प्रेरयतीह बालम् ॥ २ ॥
यस्मिन् बभूवुस्तव नाथ नेमे

दीक्षाऽवबोधावपुनर्भवश्च ।
तं रैवतं दैवतकोटिशस्यं
स्तवीमि दिव्यार्थनिधिं गिरीन्द्रम् ॥ ३ ॥
न बाह्यमात्रैररिभिः प्रतापिताः
किन्त्वान्तरैरप्यखिलैरघात्मभिः ।
इमं सनाथं प्रभुणा त्वया गिरिं
श्रिता जना निर्वृतिमाश्रयन्त्यहो ॥ ४ ॥
कोटाकोट्यो विंशतिर्यस्य मूर्त्ते-
रम्भोधीनां जज्ञिरे वज्रमय्याः ।
सृष्टायाः श्रीब्रह्मनाकाधिपेन
श्रीनेमिं तं रैवतेशं प्रणौमि ॥ ५ ॥
विश्वत्रयस्यापि तु दिक्चतुष्के
हन्तुं प्रसर्प्पद्भवदुःखचक्रम् ।
विनिर्मितद्वादशमूर्त्तिमीडे
नेमिं त्रिकल्याणकचैत्यसंस्थम् ॥ ६ ॥
स मङ्गलं रैवतशैलशेखरः

श्रीनेमिनेता वितनोतु भाविनाम् ।
पादा यदीया दधते सुरद्रुतां
जगत्त्रयीवाञ्छितसौख्यदायिनः ॥ ७ ॥
भास्वद्विभूतिर्गणनायकाश्रितो
विलासपात्रीकृतसर्वमङ्गलः ।
रातु श्रियं शम्बरवैरिघातकृ-
न्नेमिर्जिनो वो जगदेकशङ्करः ॥ ८ ॥
मां रूपाभिरतिं[१] त्वदेकशरणां नव्यप्रभां भूपजाम्
स्फूर्ज्जद्रागवशां चिरं परिचितां त्यक्त्वा सुधाकीर्गिरम् ।
मुक्तिं रूपविवर्ज्जितां बहुतरैर्भोग्यां चिरत्नां कथं
निस्स्वामिच्छसि रागसंस्तवमुचं वाग्योगहीनां प्रभो॥९॥
इतीरितो यो नरनाथपुत्र्या,
चिरानुरागाचितराजमत्या ।
जगाम मोहं भगवान् वशी न
स नेमिनेता शिवतातिरस्तु ॥ १० ॥
येनाञ्जनश्यामरुचाऽपि राजी-

१ रूपातिरतिमिति च पाठः ।

मतीमनस्तन्मयभावमाप्तम् ।
रक्तं तदन्वत्यवदातमासी-
त्तं नेमिनेतारमहं प्रणौमि ॥ ११ ॥
यस्य प्रतापज्वलने बभूवु-
र्मदाः पतङ्गा इव विष्टपानाम् ।
तमप्यरिं कामभटं जिगाय
यो नेमिनाथं शरणं श्रये तम् ॥ १२ ॥
नेमे बभासे द्युतिमण्डलं ते
तनोः शितिस्निग्धतमं प्रसर्प्पत् ।
महार्णवाभं वरदेशनायां
फेनायितं यत्र रदप्रभाभिः ॥ १३ ॥
तेषां मुधा क्लेशकरं जनन्या
जन्माङ्गिनां भारकरं धरित्र्याः ।
जानन्ति दुष्कर्म्महता भवन्तं
न ये भजन्ते प्रणमन्ति चेशम् ॥ १४ ॥
संसारदुःखामयनाशनाय

त्वमेव वैद्योऽसि जगत्त्रयेऽपि ।
त्वत्सङ्गमोपायजडाः कथं ही
प्राप्स्यान्ति तन्निर्वृतिशर्म्म तीर्थ्याः ॥ १५ ॥
बंभ्रम्यमाणेन गतिष्वनारतं
मया समग्रास्वपि चित्ररूपिणा ।
दुःखान्यनन्तान्यनुभूय बिभ्यताऽ
धुना प्रपन्नोऽसि विभुस्ततोऽव माम् ॥ १६ ॥
पुनः पुनर्द्राग् दिवसः स पक्षो
मासो मुहूर्त्तोऽस्तु स वत्सरश्च ।
त्वद्दर्शनं यत्र भवेद्विभो मे
सर्वेष्टसौख्यप्रदवन्द्यसेवा ॥ १७ ॥
अर्थी शिवस्याहममुष्य दाता
त्वमेव तेनास्मि भवन्तमेव ।
नेमे शरण्यं शरणं प्रपन्नः
प्रभूचितं तत् कुरु मे प्रसन्नः ॥ १८ ॥
श्रीपुण्डरीकाचलमण्डनाय

युगादिदेवाय नमोऽस्तु तस्मै ।
नैःश्रेयसश्रीरपि किंकरीव
सदा यदाज्ञावशतां दधाति ॥ १९ ॥
वन्दे चतुर्विंशतिमर्हतोऽष्टा-
पदावतारे ऋषभेश्वरादीन् ।
जगत्त्रयाभीष्टसुखप्रदानैः
सुरद्रुमा ये भरते बभूवुः ॥ २० ॥
प्रणौमि संमेतगिरीन्द्रतीर्था-
वतारचैत्येऽजितनाथमुख्यान् ।
जिनेश्वरान् विंशतिमक्षरश्री-
शृङ्गारहारान् सुरनायकार्च्यान् ॥ २१ ॥
गच्छन् निर्वृतिमाजुहूः प्रियतमामेत्योग्रसेनौकसो
द्वारे वीक्ष्य विवाहडम्बरमिषान्मोहारिभूभृद्बलम् ।
भीतोऽरण्यसुयत्नमोचितपशुर्मन्ये प्रियां बान्धवां-
स्त्यक्त्वा पूत्कृतिकारिणो गिरिशिरः श्रीनेमिनाथोऽगमत् २२
मत्वैतद्भुवनातिशायिसुभटी स्वं देवरं च द्विषो

मोहाद्यातु विमोच्य सङ्गतवती तत्रैव पत्यात्मनः ।
भेजे तेन सहैव निर्वृतिरमां नित्यां परानन्दभाग्
वन्दे राजमतीं सदा[1] भगवतीं तां विश्ववन्द्यक्रमाम् ॥२३॥

यो भ्रातृजायार्पितनेमिवैद्यो-
दितौषधैर्मोहगरं निरस्य ।
स्फुरत्प्रबोधः समतां स्वबन्धो-
र्लेभे स्तुवे तं रथनेमिसिद्धम् ॥ २४ ॥

श्रीनेमिसाधुक्रमभक्तिलब्ध-
दिव्यर्द्धिरिद्धातिशयप्रभावा ।
श्रीसङ्घरक्षा विहितावधाना
श्रेयोऽम्बिका यच्छतु सिंहयाना ॥ २५ ॥

यत्रावलोक्य प्रभुणोज्जयन्तः
पूतोऽभितो यं विदधे गिरीन्द्रः ।
शृङ्गेऽतितुङ्गेऽत्र पवित्रमूर्त्ति
प्रणौमि नेमेरवलोकनाख्ये ॥ २६ ॥

तनूद्भवं श्रीहरिजाम्बवत्यो-

---

१ मुदेति च पाठः ।

नेमेर्विनेयं जगदग्र्यसत्त्वम् ।
श्रीरैवताद्रेः शिखरेऽत्र लब्ध-
शिवं मुदा शाम्बमुनिं नमामि ॥ २७ ॥
अध्युष्टकोटीषु कुमारकाणां
प्रभुर्यदूनां प्रति दैत्यशत्रोः ।
द्विधाऽपि यो वैरिगणं जिगाय
प्रद्युम्नसिद्धं प्रणमाम्यहं तम् ॥ २८ ॥
यस्तीर्थभक्त्या गतपापराशि-
श्चौरोऽपि देवश्रियमाप रम्याम् ।
निर्वाणमागामिभवे गमी स
देयात्सुखं सिद्धविनायको मे ॥ २९ ॥
कपर्दिसद्मेन्दुसहस्रबिन्दु-
गुहेभकुण्डप्रमुखाः परेऽपि ।
सहस्रलक्षाऽऽम्रवणादयश्च
तीर्थप्रदेशाः सुखदा जयन्ति ॥ ३० ॥
सर्ववस्तुकलनैकनदीष्ण ज्ञानसागरगुरो त्रिजगत्याः ।

उज्जयन्तगिरिशेखर नेमे विश्वरक्षणचणाय नमस्ते ॥३१॥

एवं रैवतशैलमौलिमुकुटश्रीनेमिनेतर्जग-
त्सर्वाभीष्टकरः स्तुतोऽपि मयका मुग्धस्तवेनाधुना ।
कारुण्यामृतवारिधे मम कृपापात्रस्य बोधिश्रियं
शुद्धां देहि जयश्रिया भवरिपोः स्याद् ब्रह्मलक्ष्मीर्यतः॥३२॥

एवं नेमिजिनं जगत्त्रयपतिं श्रीरैवतालङ्कृतिम्
शक्रालीमुनिसुन्दरस्तवगणैर्नूतक्रमं यः स्तुते ।
सर्वाभीष्टसुखोच्चयैरविरतं स्फूर्जत्प्रमोदाऽद्वयो
मोहद्वेषि जयाश्रिया स लभते श्रेयोऽचिराच्छाश्वतम्॥३३॥

इति युगप्रधानावतारवृद्दत्तपागच्छाधिराजश्रीदेवसुन्दरसूरि-
श्रीज्ञानसागरसूरिश्रीसोमसुन्दरसूरिशिष्यैः श्रीमुनि-
सुन्दरसूरिभिर्विरचिते जयश्र्यङ्के श्रीजिनस्तोत्र-
रत्नकोशे प्रथमप्रस्तावे श्रीगिरिनारमौलि-
मण्डनश्रीनेमिनाथस्तवनरूपं स्तोत्ररत्नं
तृतीयम् ।

संवत् १४७६ वर्षे, एतत् स्तवनद्वयमपि, सं०-देवराज सं०-हेमराज सं०घडासिंहसङ्घस्य सौवर्णकलशच्छत्रचामराद्युपशोभितप्रौढ-श्रीजिनालयत्रयादिसामग्रीसमुपेतस्य सार्थेन कृतं तैर्देवान् वन्दमानैरेव ।

———o———

॥ अर्हम् ॥

जयश्रीसङ्गिनः पृथ्व्यां यस्याऽऽसीत्पूतमंह्रिभिः ।
तीर्थं सोपारकं तत्र तं स्तुवे वृषभप्रभुम् ॥ १ ॥

पुरेऽत्र चैत्ये भरतेश्वरः प्रभो
स्वकारिते स्वर्णमये तवाकृतिम् ।
अतिष्ठिपज्जीवत एव यस्य तं
स्तुवन्निहामुत्र च संश्रये शिवम् ॥ २ ॥

विभाति काव्यं न सतामलंकृती-
र्विनाऽथ चासामुपमैव बीजति ।
न चास्ति सा नाथ जगत्त्रयेऽपि ते
तव स्तुतौ कः कविताग़ुणस्ततः ॥ ३ ॥

तव स्वरूपं न विकल्पयोनयः
स्पृशन्ति शब्दास्तु विकल्पबाऽतिगम् ।
अबोद्धृभिस्तस्य कथं कृतिः स्तुते-
र्न वीतरागः स्तुतिभिश्च तुष्यसि ॥ ४ ॥

तथापि नाथौपयिकं न्यगाद्यदो

हितस्य सम्यग् मुनिभिर्हितैषिणाम् ।
निषेव्य चैतत्फलमप्यलम्भि तैः
फलानुवादेन च हेतवे स्पृहा ॥ ५ ॥
हितार्थिपङ्क्त्यावयमप्यतो जनः
प्रभो निषीदन् पथमेनमादृतः ।
सुनिश्चितार्थैऽनुगते च पूर्वजैः
पथि प्रवृत्तिर्न विचारमर्हति ॥ ६ ॥
मनांसि केषामपि न स्पृशन्ति ते
स्वरूपमेषा सुधियां मृषा नु गीः ।
अनन्तशर्मात्मनि यत्त्वयि स्थिता-
न्यमून्यमूदृंशि भवन्ति भाविनाम् ॥ ७ ॥
पुरेऽत्र नूनं सरसां मितिद्विषा-
मधीयतेऽम्बूनि सरोरुहाणि च ।
यशःसमूहाद्विमलत्वमंशशः
प्रभो गुणेभ्यस्तव सौरभं पुनः ॥ ८ ॥
त्वदीयभक्तेः फलदानकौशलं

समीहमाना विविधा लता द्रुमाः ।
ध्रुवं तदभ्यासकृते फलान्यवि-
श्रमं जनेभ्यो वितरन्त्यनेकधा ॥ ९ ॥
पतन्ति न क्षुद्रतनूभृतोऽत्र यत्
पुरे स्वयोनिष्वपि कीटकादयः ।
इति प्रभो ते ऽतिशयान्मितेतरान्
न कोऽपि मूर्त्तेरपि वक्तुमीश्वरः ॥ १० ॥
श्रीवज्रशिष्यात्किल वज्रसेना-
न्नागेन्द्रचन्द्रादिकुलप्रतिष्ठा ।
बभूव यस्मिन् भगवन् पुरस्ते
सोपारकं नन्दतु तीर्थमेतत् ॥ ११ ॥
यथेष्टसंवत्सरदानकाले
कल्पद्रुरत्नत्रिदशादिकेभ्यः ।
यमंशशोऽदा महिमानमुच्चै-
रेते तमद्यापि निदर्शयन्ति ॥ १२ ॥
मुग्धोऽसि नो तुष्यसि तीर्थिकेभ्यः

प्रौढैः स्तुवन्त्यश्चरितैर्हरादीन् ।
ते वै जयस्तम्भनिभास्त्रिलोकी-
जैत्रस्य मोहस्य स चापि तेऽर्हन् ॥१३॥
त्यजन्नपि त्वां खलु गौरवं श्रियां
पदं परं प्रापयते मुनीश यः ।
सदा भजन्नप्यपरांश्च लाघवं
कलाऽस्य मोहस्य विमृश्यतां प्रभो ॥१४॥
त्वयाऽपमानं गमितोऽपि मोह-
राड् बभूव हेतुः शिवसम्पदाप्तये ।
भवार्त्तिजाताय परैस्तु सेवितोऽ
प्यहो खलानां विपरीतवृत्तिता ॥ १५ ॥
कृपैकधर्मे वदसेऽङ्गिनोऽसुभि-
र्वियोजयस्येव बुधैश्च सेव्यसे ।
यथार्थवाक्त्वाथ यथोक्तकृच्छ्रुत-
स्तथापि विज्ञानमिदं तवाद्भुतम् ॥१६॥
भजन्ति देवान् दितिजादिहिंसयो-

न्मदान् गुरुंश्च स्वकुलाभिमानिनः ।
स्वपक्षसिद्ध्यै विविधागमांश्च ये
शिवार्थिनस्तेऽपि न कस्य नर्म्मणे ॥१७॥
भवाननाथोऽपि करोति निर्भयान्
प्रभूंस्त्रिलोक्याश्च जिन स्वभाक्तिकान् ।
परे सुनाथा अपि मोहतो जग-
ज्जयोन्मदा नित्यभयान् सुदुर्गतान् ॥१८॥
भजन्ति यत्साम्यसमाधिजं सुखं
प्रशान्तदोषास्तव सेवका अपि ।
निजानिजानुग्रहविग्रहग्रहैः
सुदुःस्थिता नैतदपि प्रभो परे ॥ १९ ॥
कृपाङ्गभाजः सृजतां न दुःखिता-
न्न कर्म्मसापेक्षतया महेशता ।
न साक्रियत्वेन विमुक्तिरप्यतो
मुधाऽभिमानान्निपतन्त्यधः परे ॥२०॥
न यस्य तस्यापि सृजन् जनुर्मृती

विमुच्यते कश्चिददृष्टबन्धनात् ।
विधंस्त्वदन्योजगतोऽपि ते कथं
विमुक्तिकृत्स्वस्य परस्य वा ततः ॥२१॥
ययाऽन्वकम्पि त्रिजगत्त्वया प्रभो
न्यघानि भावारिगणश्च तज्जयी ।
विनैव तां साम्यकलां तव श्रियं
न विश्वसृष्ट्यादिभिरप्यगुः परे ॥२२॥
सचेतसोऽपि स्तुतिकारिणो निजान्
शिवं प्रदायापि करोष्यचेतसः ।
स्तुवन्ति युक्तं तत एव ते मुने
पुनर्भवन्तं न परं च कश्चन ॥ २३ ॥
तथाऽप्यसाधारणसद्गुणस्तुतौ
रसेन भक्तेस्त्वमसि स्तुतो मया ।
न चैव तुष्यामि फलादतस्त्वहं
स्वभावमेनं च न हातुमर्हसि ॥ २४ ॥
श्रीसोपारकतीर्थभूषणमणे श्रीमद्युगादिप्रभो

भक्त्यैवं मुनिसुन्दरामरगुरुस्तुल्यो मयाऽपि स्तुतः ।
त्वं कर्मारिजयश्रिया मम परं श्रेयः प्रयच्छाचिरा-
न्नित्यानन्दरमाविलाससुभगं विश्वेष्टकल्पद्रुमः॥२५॥

इति युगप्रधानावतारबृहत्तपागच्छाधिराजश्रीदेवसुन्दरसूरि-
श्रीज्ञानसागरसूरिश्रीसोमसुन्दरसूरिशिष्यैः श्रीमुनि-
सुन्दरसूरिभिर्विरचिते जयश्र्यङ्के श्रीजिनस्तोत्र-
रत्नकोशे प्रथमप्रस्तावे श्रीसोपारकतीर्थनाथ-
श्रीऋषभदेवस्तवरूपं स्तोत्ररत्नं चतुर्थम् ।

---

॥ अर्हम् ॥

जयश्रियाऽऽढ्यो भरताधिनेता
यस्यादिमो लेप्यमयीं सुतोऽत्र ।
प्रातिष्ठिपज्जीवत एव मूर्त्ति-
मादिप्रभुं वृद्धपुरे स्तुवे तम् ॥ १ ॥

व्युत्पत्तिमेधाप्रतिभादयो गुणा
न हेतवस्ते व्यभिचारिणः स्तुतेः ।
भक्तिस्तु हेतुस्तदतः प्रवृत्तिमा-

न्न मादृगप्यत्र विभो ऽपराध्यति ॥ २ ॥
आनन्त्यभाजामपि ते गुणानां
स्तुतावशक्तिं न च नाथ मन्ये ।
अनन्तविज्ञानबलस्वरूपो-
धत्से स्वयं येन हृदा ममैक्यम् ॥ ३ ॥
यदस्ति गम्यं तदचेतनं न चे-
त्समोहमन्यच्च पथे न चेतसः ।
अमोहविज्ञानमयस्ततः कथं
स्तुतेः पथं यासि स मोहसंविदः ॥ ४ ॥
तथापि भक्त्या स्तुतयस्त्वयीरिता
भवन्त्यभीष्टार्थफलाय भाविनाम् ।
पयोदवृन्दान्तरितेऽपि भास्वति
प्रजाभिरर्घाञ्जलयः कृता इव ॥ ५ ॥
अनन्तकालप्रभवैरनन्तै-
रपीश शब्दैर्न हि वाच्यरूपः ।
स्तुत्योऽसि विश्वैरपि चेति वाच्या-

वाच्यं स्वरूपं भवतो गृणान्ति ॥ ६ ॥
समग्रतीर्थातिशयर्द्धिवृद्धा-
त्तीर्थात्तवेदं पुरमन्विताह्वम् ।
चतुर्युगेऽप्याचमनाद्यवर्णैः
ख्यातं चतुर्भिर्भुवि नामभिर्यत् ॥ ७ ॥
स्तुवे पुरस्यास्य भुवं त्वदंह्रि-
संस्पर्शपूतां किल यत्र धर्म्मम् ।
उपादिशश्चैत्यपदे युगादौ
त्वं देशनाधाम्नि कृते सुरेन्द्रैः ॥ ८ ॥
संस्थापितायास्तव नाथ मूर्त्ते-
रिहाभवत्सागरकोटिकोटिः ।
चिरत्नतीर्थं तदिदं न कांस्कान्
स्वसेवकांस्तारयते भवाब्धेः ॥ ९ ॥
मूर्त्तिस्तवान्तर्गतसारकाष्ठा
बहिः सलेपाऽपि हरत्यजस्रम् ।
दुष्कर्मलेपं भाविनामियं त-

द्वाह्याद्बलीयान् विधिरन्तरङ्गः ॥ १० ॥

वीरान्निनन्दाङ्कशरद्य ९९३ चीकरत्
त्वच्चैत्यपूते ध्रुवसेनभूपतिः ।
यस्मिन् महैः संसदि कल्पवाचना-
माद्यां तदानन्दपुरं न कः स्तुते ॥ ११ ॥

स्तुवेऽनुकम्पां तव सर्वगोचरां
प्रसूतिहेतुं सकलेष्टशर्म्मणाम् ।
सर्वार्थसिद्धिं स्वयमास्थितोऽपि सन्
ययाऽत्र विश्वोपचिकीरवातरः ॥ १२ ॥

सनाभिरिन्द्रस्य सनाभिभूपतिः
कथं भवेद् यत्प्रभवस्य तेऽर्हतः ।
विडौजसः सर्वसुरासुरान्विता
दधुश्चतुष्षष्टिरपीश दासताम् ॥ १३ ॥

अदीपयस्तास्त्रिजगत्प्रकाशिनी-
र्विभो युगादाविह वाणिदीपिकाः ।
असङ्ख्यकालप्रचितं तमोऽ-

भितो निरस्य या धर्म्मपथानुपुस्फुटन् ॥१४॥
स्वमांसदानैरपि मोहविप्लुता-
शयैर्विधातुं शकिता न या परैः।
त्वयोपदेशैरपि सर्वजन्तुषु
व्यधायि सर्वार्थविदा कृपा परा ॥ १५ ॥
॥ अथवा ॥
क्लेशान्विचित्रान् जननादिकान् परैः
स्वयं प्रपद्यापि न यत्सुखाकृतम्।
तदव्ययब्रह्मसमाहितात्मना
गिराऽपि चक्रे सुखितं त्वया जगत् ॥ १६ ॥
न नित्यरूपे जननाद्युपाधयः
कुतः कृतार्थस्य कषायविप्लवः।
न विश्वतः कर्म्मवशो विशिष्यते
समञ्जसाऽन्येषु न कल्पनाऽपि तत् ॥१७॥
तथापि धर्मार्थ्यपि ते मतं त्यजत्-
प्रवर्त्तते यत् कुपथेष्विदं जगत्।

न तत्र हेतुस्त्रिजगद्विडम्बना-
निबद्धसन्धात् खलु मोहतः परम् ॥१८॥
दधत्परब्रह्ममयैकरूपता-
मपि त्वमेको बहुधा प्रकल्पितैः ।
श्रितोऽसि रूपैरपि नामभिः परै-
रिवाब्दवाः कूपजलाद्युपाधिभिः ॥ १९ ॥
चिरादविज्ञानतमस्तिरोहितं
निसर्गदोषव्रजगर्तदुर्गमम् ।
विना त्वया सर्वदृशा प्रभो पथं
शिवस्य सम्यग् न हि कोऽप्यदीदृशत् ॥२०॥
प्रकाशिते केवलभास्वता त्वया
जगत्यशेषेऽपि समं गवां गणैः ।
उदीयतेऽद्यापि यदिन्दुभानुभि-
स्तदीश तत्तेऽभ्यसितुं नु कौशलम् ॥ २१ ॥
कलिस्त्वदाज्ञावशवर्त्तिनां सतां
न धर्म्मलक्ष्मीं जिन हर्तुमीश्वरः ।

यतो नदीमातृकदेशवर्त्तिना-
मवग्रहः सस्यरमां न शोषयेत् ॥२२॥
जगत्त्वदाज्ञां व्यजहात्कुकर्म्मभि-
स्त्वयीश माध्यस्थ्यमुपास्थिते ततः ।
अनीश्वरं दुर्मततस्करैः कलौ
कदर्थ्यते तद्भवचारकस्थितम् ॥२३॥
बिभेमि तन्नाथ समीक्ष्य सांप्रतं
ततो निलीनोऽस्मि तवैव शासने ।
तदाश्रितं पालय मां निजं भव-
भ्रमोद्भवक्लेशततेः कृपां कुरु ॥२४॥
अनादिमध्यान्तमगम्यमभ्रमं
यदर्थयन्ते मुनयः समाहिताः ।
त्वदेकनिष्ठं परमीश तन्मह-
स्तवैव तेनोक्तिषु सुस्थिता बुधाः ॥२५॥
एवं श्रीऋषभेश वृद्धनगरालङ्कारचूडामणे
स्तुत्वा त्वां गुरुसोमसुन्दरयशस्त्रैलोक्यकुक्षिंभरे ।

ज्ञानादित्रयशुद्धिमेव भगवन् याचे यतोऽन्तर्द्विष-
च्चक्रस्याप्तजयाश्रिया तव समां लक्ष्मीं लभेयाचिरात् २६

एवं यो मतिमान् स्तुते जिनवरं श्रीमद्युगादिप्रभुं
शक्रालीमुनिसुन्दरस्तवगणैर्नूतक्रमाम्भोरुहम् ।
सर्वाभीष्टसुखोच्चयैरविरतं स्फूर्जत्प्रमोदाऽद्वयो-
मोहद्वेषि जयाश्रिया स लभते श्रेयोऽचिराच्छाश्वतम्॥२७॥

इति युगप्रधानावतारबृहत्तपागच्छाधिराजश्रीदेवसुन्दरसूरि-
श्रीज्ञानसागरसूरिश्रीसोमसुन्दरसूरिशिष्यैः श्रीमुनि-
सुन्दरसूरिभिर्विरचिते जयश्र्यङ्के श्रीजिनस्तोत्र-
रत्नकोशे प्रथमप्रस्तावे श्रीवृद्धनगरालङ्कार-
श्रीऋषभदेवस्तोत्ररत्न पञ्चमम् ।

॥ अर्हम् ॥

श्रेयःश्रेणिनिदानं
भवरिपुविजयाश्रियाऽऽप्तशिवसौख्यम् ।
अर्बुदगिरिवरमुकुटं
श्रीऋषभं प्रभुमहं स्तोष्ये ॥ १ ॥

स्तोत्रमर्हति गुणी न कल्पितै-
  र्नापि सद्भिरपरैः समैर्गुणैः ।
किन्तु सद्भिरसमैः स तु त्वमे-
  वेति वीतभवभूयसे मया ॥ २ ॥

सोद्यमैः प्रकटितस्तव स्तुतिः
  सर्ववाञ्छितकरीति सूत्र्यते ।
तां विधाय च करोति कोऽपि नो
  कस्यचित् पुनरतोऽलसैरपि ॥ ३ ॥

वेद्मि गौरवकृतो महर्षिभि-
  र्न स्तुतस्य तव मादृशोक्तयः ।
तोष्यते ह्यपि कराहतैः शिशो-
  रम्बिकेति सफलस्त्वयं श्रमः ॥ ४ ॥

कोऽप्यरोपि जिनधर्म्मपादपो
  दुःषमावधिजयी त्वया विभो ।
वाञ्छितोपनतया फलश्रिया
  यः सुखाकरति विष्टपत्रयम् ॥ ५ ॥

भीतिमर्बुदमिमं क्षमाभृतं
संश्रिता न दधतेऽरिचक्रतः ।
त्वां तदेतदुपरि क्षमाभृतं
संश्रितस्य मम का भवारिभीः ॥ ६ ॥
शक्तितो दितिसुतादिघातकै-
र्धिक्कृता सकलदैवतान्तरैः ।
यत्त्वदेकशरणाऽभवत्कृपा
त्वां कृपैकविषयः श्रितोऽस्मि तत् ॥ ७ ॥
स्पर्द्धते महिमतस्त्वयाऽत्र यः
पातयन्ति तमधः स्मरादयः ।
त्वं तु तानपि निहंसि निर्म्ममो-
नाथ केयमकृतज्ञता तव ॥ ८ ॥
निर्वहन्ति भाविनो यतोऽखिला
मोहमेनमपि हंसि सेवकम् ।
धर्म्ममेककरुणं च भाषसे
विश्वसन्ति बहवो न तत्त्वयि ॥ ९ ॥

न स्पृशन्ति तव शासनं भिया
बालिशास्तदिति नातिचित्रकृत्।
साधवोऽपि मदनादिसेवकान्
घ्नन्ति यत्र जगतां प्रियानपि ॥ १० ॥

इति वा पाठः।

श्लाघ्यते स विमलोऽर्बुदाधिपो
योऽम्बिकावरमवाप्य सन्मतिः।
भाविनीमवगणय्य सन्ततिं
त्वद्विहारमिममाश्वचीकरत् ॥ ११ ॥
लल्ल एष कलिमल्लजित्वरः
कस्य न स्तुतिपदं स वीजडः।
उद्धरन् स्वमिव यो भवावटा-
च्चैत्यमेतदुददीधरत्तव ॥ १२ ॥
स्तौमि तान् जिनपते मृगानपि
श्रीमदर्बुदगिरीन्द्रवासिनः।
ये दरीषु रममाणकिन्नरी-

गीतमुज्ज्वलयशः पिबन्ति ते ॥ १३ ॥
पक्षिणोऽपि जिन संस्तवीमि ता-
नर्बुदाद्रिशिखरप्रचारिणः ।
भव्यलोचनचकोरचन्द्रिकां
ये पिबन्ति तव मूर्त्तिमाक्षिभिः ॥ १४ ॥
यः समत्सरमतिस्त्वयि प्रभौ
श्रेयसां न स विलासमीक्षते ।
यस्य भास्वदुदये तमोदृशो-
र्नैषयज्जलरुहां विकाशदृग् ॥ १५ ॥
रोषकल्मषमधारि न त्वया
नापि शस्त्रकटकादिडम्बरम् ।
किङ्करीकृतजगत्त्रयस्तथाऽ-
प्यान्तरो रिपुगणो न्यहन्यत ॥ १६ ॥
त्वन्मते त्वमबला अपि स्थिता-
घ्नन्ति मोहनृपतिं समाहिताः ।
यो विडम्ब्य हरिशंभुवेधसो

दैवतलपदतो व्यदूरयत् ॥ १७ ॥
नाऽवधीः कमपि दानवादिकं,
रोषतोषविवशोऽपि नाभवः ।
आज्ञयैव त्रिजगत् सुखाकृतं
यत्त्वयेति विभुता तवाद्भुता ॥ १८ ॥
यासु नाथ पतयोऽपि नाकिनां
कम्पमेव दधते हतौजसः ।
ता जनिव्ययजरादिकापद-
स्त्वत्परो नहि निहन्तुमीश्वरः ॥ १९ ॥
ताभिराहितभृशव्यथस्तत-
स्त्वां श्रितोऽस्मि शरणं जगत्प्रभुम् ।
तत्प्रसीद भगवंस्तथा द्रुतं
हन्मि ताः स्वपरयोर्यथाऽखिलाः ॥२०॥
त्वां विहाय जगतां हितं परान्
ये भजन्ति कुधियः शिवश्रिये ।
स्वान्त्यतीत्य जिन मानसं सरः

शुद्धये मरुमरीचिकासु ते ॥ २१ ॥
त्रैघदुःखविषमामयोच्चयो
येन शाम्यति भवोद्भवोऽखिलः ।
तत्त्वदागमरसायनं मम
श्रीजिनास्तु सुलभं भवावधि ॥ २२ ॥
श्रेयसामासि निधिः किलाक्षयो
भाविनामुपचिकीरिह स्थितः ।
तान्यसंख्यभविनां प्रणेमुषां
यद्ददासि न च हानिमियूति ॥ २३ ॥
सर्वप्रशस्यफलदः परमोन्नतिश्रीः
सद्वंशभूः श्रितवतामविताऽरिचक्रात् ।
तीर्थोत्तमः प्रहतपङ्कसरस्वतीको
जीयाज्जिनादिम भवानयमर्बुदश्च ॥२४॥
एवं श्रीमुनिसुन्दरस्तुतिपदं त्वां श्रीयुगादिप्रभो
स्तुत्वा भूधरनायकार्बुदाशिरश्चूडामणेऽभ्यर्थये ।
मोहारातिजयश्रियाऽतिसुभगां श्रेयोरमां तां मम

ब्रह्माद्वैतमयीं प्रदेद्यनुभवो यस्यास्तवैवार्हतः ॥२५॥

इति युगप्रधानावतारबृहत्तपागच्छाधिराजश्रीदेवसुन्दरसूरि-
श्रीज्ञानसागरसूरिश्रीसोमसुन्दरसूरिशिष्यैः श्रीमुनि-
सुन्दरसूरिभिर्विरचिते जयश्र्यङ्के श्रीजिनस्तोत्र-
रत्नकोशे प्रथमप्रस्तावे अर्बुदगिरिश्रीऋषभ-
स्तोत्ररत्नं षष्ठम् ।

---

॥ अर्हम् ॥

जयश्रियं सर्वरिपून् जिगीषतां
स्तुता यदाख्याऽपि तनोति मन्त्रवत् ।
स्तवीमि तं पार्श्वजिनं शिवश्रिये
श्रीजीरिकापल्लिवतंसमिष्टदम् ॥ १ ॥

प्रसद्य मातः कुरु भारति स्थिरां
हृदि स्थितिं मे कविकल्पधेनुके ।
विधाय यत्पार्श्वजिनस्य संस्तुती-
र्जनो लभेतायमपीप्सितं फलम् ॥ २ ॥

इहाप्यहीन्द्रो धरणः प्रसत्तिभाक्
यया तनोतीष्टसुखानि सप्रियः।
परत्र चाप्याः शिवसम्पदोऽपि तां
न कः स्तुतिं पार्श्वविभोर्विधित्सति ॥ ३ ॥

गुणाननन्तान् क्रमवर्त्तिवाग् न ते
भवाम्यलं स्तोतुमितीश वेद्म्यहम्।
तथापि ते भक्तिरसैकवेदनं
वेद्यान्तरं पार्श्व विचारमस्यति ॥ ४ ॥

अपारयन् वक्तुमयं जनः प्रभो
सतोऽपि ते ऽनन्ततयोज्वलान् गुणान्।
कथं परेषु स्तुवतोऽसतोऽपि तान्
कुतीर्थिकांश्चित्रकृतो न वन्दते ॥ ५ ॥

॥ अथवा ॥

अशेषतो नाथ ममैव न स्तवै-
र्न नूयसे किन्तु सुयोगिनामपि।
न पूर्यते यः किल धूमरीकणै-
स्तथैव सिन्धुः स सरिद्गणैरपि ॥ ६ ॥

अथ स्वबोधावधि ते स्तुतिं वद-
न्नवाच्य एषोऽपि जनस्तदा तथा ।
यथेच्छमाक्रामतु खं सुपर्णसू-
र्बलानुरूपं मशकोऽपि का क्षितिः ॥ ७ ॥
ततः कृता या तव दिव्यदृष्टिभि-
र्महर्षिभिर्ब्रह्ममुखैश्च संस्तुतिः ।
तनोमि तामप्यहमल्पधीधनः
स्वशक्त्यपेक्षा हि फलार्थिनां क्रिया ॥ ८ ॥
अथास्त्यपि द्वारमिदं फलाय य-
ल्लवोऽप्यलं ते महिमाऽम्बुधेः स्तुतः ।
महामयान् बिन्दुरपि प्रहन्ति वा
न किं सुधाया विधिनोपयोगभाग् ॥ ९ ॥
स्वशक्त्यशक्त्योरथ वौचिती न मे
विचारणे भक्तिवशस्य ते स्तुतौ ।
स्वयं भवान् भक्तजनेऽस्ति यत्प्रभुः
समग्रचिन्तास्पददानदीक्षितः ॥ १० ॥

भवन्ति सर्वेष्टरमावुवूर्षवो
जिहासवो दूरमुपद्रवाश्च यम्।
स्पृहाऽपि तस्यैव तव स्तवे भवेत्
फलाय सत्कर्म्ममनोरथोऽपि यत् ॥ ११ ॥
सबोधिकारोग्यमुपेयमिच्छतां
स्तुतिं तवैवौपयिकं जगुर्बुधाः।
इति प्रयत्नो ऽत्र ममाप्ययं भवन्
कृतार्थतामृच्छतु ते प्रसादतः ॥ १२ ।
भवत्यसाराऽपि हि गीरनन्तस-
द्गुणे प्रयुक्ता मम विस्तरीष्यते।
सरित्पतिं प्राप्य भवेत् प्रसारिणी
सरित्तनीयस्यपि नाभितः किमु ॥ १३ ॥
सुसम्पदस्त्वाः शुभशक्तयोऽपि वा
त्वदेकभक्त्यव्यभिचारिहेतुकाः।
ममापि सैषोऽनुभवः स्फुरन् कथं
भिनात्ति ते पार्श्व नुतौ न मन्दताम् ॥ १४ ॥

महामयाद्याखिलविघ्नभेदनात्
प्रमाणमारोहति ते स्तुतिः स्वयम् ।
विभिन्दती तीक्ष्णमुखेन यत्पटं
करोति सूच्येव हि मार्गमात्मनः ॥१५॥

प्रयत्नभाजामपि ते स्तवेऽग्रतः
प्रवृत्तये स्युर्भवदिष्टसिद्धयः ।
सुखाकृताः शीतलवायुनाऽपि हि
श्रयन्ति तृष्णातरलाः स्वयं सरः ॥१६॥

विभिद्य बाह्यान्तरविघ्नसंमिल-
त्कपाटयुग्मं परशुस्तव स्तवः ।
मनीषिणः केवलगोपुरे शिवा-
लये ध्रुवानन्दमये प्रवेशयेत् ॥ १७ ॥

पदं महिम्नां तव संस्तुतिं दध-
न्न दूयते दुःखभरैर्भवोद्भवैः ।
भृताञ्जलैः किं सरसीं समाश्रितः
प्रदह्यतेऽरण्यभवैर्दवाग्निभिः ॥ १८ ॥

तपांसि पुंसां ददते न तत्फलं
न यन्त्रमन्त्रा न च योगसाधनाः ।
न चापि देवान्तरपर्युपासना
स्तनोति यत्ते स्तवनं मनोऽतिगम् ॥१९॥
महोन्नता शुद्धपदस्थितिप्रदाऽ
वदातसोपानततिप्रनिर्मिता ।
दधाति निःश्रेणितुलां तव स्तुतिः
शिवालयारोहकरी मनस्विनाम् ॥२०॥
स्तुमस्तमेकं धरणं फणीश्वरं
तवानुकम्पाफलभोगशालिनम् ।
भवान्तरे यं परमेष्ठिमन्त्रदः
स्वयं भवानन्वशिषज्जगद्गुरुः ॥२१॥
दधात्ति क्ष्मेलाश्रवसः स विंशतिं
शतानि चक्षुः श्रुतिराट् ततः किल ।
गुणांस्तव स्तोतुमवेक्षितुं श्रियं
प्रभावमाकर्णयितुं च सर्वतः ॥ २२ ॥

पद्मावतीयुक् त्वदुपास्तिलालसो-
    व्यनक्ति संप्रत्यपि तत्कृतज्ञताम् ।
तवोग्रभक्तिं च स भक्तपालनात्
    फलानुमेया हि निदानशुद्धयः ॥ २३ ॥
भयानि रोगोरगवह्निविद्विषां
    सदुर्जनानां प्रभवन्ति तेषु न ।
स्तुतिस्त्वदीया किल यैर्विधीयते
    वृत्तिर्बुधैः स्वस्य जिनेश पालनी ॥ २४ ॥
अकृत्रिमा बद्धगुणा स्तुतिस्तवा-
    नुभूयमाना स्वदतेऽधिकाधिकम् ।
न चर्व्यमाणा भजतेऽधिकाधिकं
    किमिक्षुयष्टिः प्रसरद्रसात्मताम् ॥ २५ ॥
कृता परेषां तु विकल्पितैर्गुणै-
    र्विचार्यमाणा विशरारुरेव सा ।
किमन्तरन्तः कदली प्रदर्शयेत्
    समीक्ष्यमाणा न निजामसारताम् ॥२६॥

जडा गुरूकृत्य परान् स्तुवन्ति यै-
र्जगज्जनिस्थेमवधादिकृद्गुणैः ।
वदन्ति तैरेव विडम्बकानमून्
मतत्वदाज्ञाः स्तबनार्हतामुचः ॥ २७ ॥
गतास्त्वदन्ये स्तवनीयतां गुणै-
र्न कल्पितैर्गौरवमापिता अपि ।
न वायुभिर्मूर्द्धसु भूभृतां गता-
न्यपि त्यजन्तीह रजांसि लाघवम् ॥२८॥
मृगास्त्वदन्येषु मरुस्थलेष्विव,
स्फुरद्गुणाम्भोभ्रमविप्लुताशयाः ।
हहा तमोग्रीष्मखरातपार्दिता
वृथैव ताम्यन्ति शिवाशयाः स्तवैः॥२९॥
तव स्तुवान्मुक्तिरमाप्यवाप्यते
प्रयास एव त्वपरस्य सर्वतः ।
ददाति रत्नाकरवन्मणिश्रियं
न चित्रतुल्याऽपि जलाशयान्तरम् ॥३०॥

स्तुतिस्रजं ते सुमनोमतामिमां
दधाति यः स्वे गुणगुम्फितां हृदि ।
स जीरिकापल्लिविभो विमुच्यते,
कुकर्म्मभिः पार्श्व सुखैकभाजनम् ॥३१॥

एतज्जातिभयामयादिविविधक्लेशैर्जगद्व्याकुलं
तैरेव व्यथितैर्न शक्यमवितुं श्रीपार्श्व देवान्तरैः ।
त्वामेवेति बुधाः श्रयन्त्ययमपि स्तोतुं प्रवृत्तो जनः
सर्वेष्टा लभतां त्वदेकशरणः श्रेयःश्रियः शाश्वतीः ॥३२॥

जीरापल्लिविभूषणं जिनमिति श्रीपार्श्वनाथं मुदा
शक्रालीमुनिसुन्दरस्तवगणैर्नूतक्रमं यः स्तुते ।
सर्वाभीष्टसुखोच्चयैरविरतं स्फूर्जत्प्रमोदाऽद्वयो
मोहद्वेषि जयश्रिया स लभते श्रेयोऽचिराच्छाश्वतम् ॥३३॥

इति युगप्रधानावतारबृहत्तपागच्छाधिराजश्रीदेवसुन्दरसूरि-
श्रीज्ञानसागरसूरिश्रीसोमसुन्दरसूरिशिष्यैः श्रीमुनि-
सुन्दरसूरिभिर्विरचिते जयश्र्यङ्के श्रीजिनस्तोत्र-
रत्नकोशे प्रथमप्रस्तावे श्रीजीरापल्ली-
श्रीपार्श्वस्तोत्ररत्नं सप्तमम् ।



॥ अर्हम् ॥

जयश्रीस्तंभनाधीश श्रीमत्पार्श्वजगत्प्रभो ।
तव स्तवनतः कुर्वे सर्वश्रेयःश्रियो वशाः ॥ १ ॥

आरभ्येच्छामपि शुभफले ते स्तवे साभियोगा
मुक्त्यै सर्वेऽप्यमलसरसीवाम्बुने नाऽद्भुतं तत् ।
त्रैकाल्येऽपि ह्यपरनुतिषु क्लेशमात्रप्रदासू-
द्युक्तास्तीर्थ्या इव रविरुचिष्वर्णसेऽस्यै तु चित्रम् ॥२॥

कुशलः प्रकरोति कर्म तत्
प्रतिभात्यायतिसुन्दरं हि यत् ।
इति कस्य भवत्परान् प्रभो
स्तुवतो नर्म्मपदं न कौशलम् ॥ ३ ॥

शिवसुखं ह्यपरे भवसङ्गताः
स्तुतिशतैरपि नो ददितुं क्षमाः ।
स्पृहयतोऽस्य तदेव तवैव तत्
समुचिता नुतिरर्थितदायिनः ॥ ४ ॥

चित्रं न देवेषु परं प्रबुद्धाः

स्तुवन्ति मल्लोड्डुषु सूरवत्त्वाम् ।
केऽप्याद्रियन्तेऽर्कधियेव भानि
देवान्तराण्याप्ततया नु चित्रम् ॥ ५ ॥
विघ्नान् विनिघ्नन् स्वयमेव कर्त्तॄन्
शिवार्थिनः प्रेरयति स्तवस्ते ।
प्रीता न किं सौरभतोऽपि तापा-
र्दिता द्रुमं चन्दनमाश्रयन्ति ॥ ६ ॥
इहाप्यमुत्रापि च पार्श्वनेतः
श्रेयःसुखश्रीप्रतिभूः स्तवस्ते ।
जनाः परोक्तौपयिकान्तरैस्तद्
वृथैव ताम्यन्ति तदर्थिनः किम् ॥ ७ ॥
प्रभुत्वसीमा ममतोद्धतैः परै-
र्नियोजिता येषु हरादिषु प्रभो ।
व्यडम्बयत्तान्मदनस्त्वमेव तं
जघन्थ तत्ते प्रभुताऽस्तसीमका ॥ ८ ॥
मनांसि धावन्ति समग्रदेहिनां

प्रभो ग्रहीतुं कुशलानि सर्वतः।
स्तुवे जिनैतान् कुशलांस्तु कांश्चन
त्वदागमाद्ये तदुपायवेदिनः ॥ ९ ॥
सुनिश्चितानन्तहितं विहाय
त्वदीरितानुष्ठितिकर्म केचित्।
सुनिश्चितानन्तभवार्त्तिदेषु
मिथ्यात्वकर्म्मस्वपि धिग् यतन्ते ॥ १० ॥
कथं रमन्ते न परेषु ते प्रभो
प्रकल्पिताणुप्रभुतागुणेष्वपि।
तवोपदेशासहना विकल्पनो-
द्भवेषु संसारसुखेषु ये रताः ॥ ११ ॥
यथा निजानुष्ठितिसाधुकल्पिता
जिनेन्द्र मुक्तिः कणभक्षशिष्यकैः।
भवद्गुणद्वेषभवार्त्तिपातिनां
न वच्मि तेषां सुलभां तु तामपि॥ १२ ॥
स्वसेवकानेव भवाम्बुराशा-

वर्हन् परे मज्जयितुं समर्थाः ।
प्रभुस्त्वतस्तारयितुं त्वमेता-
नेवेति तेभ्योऽधिकता ऽस्तु का ते ॥१३ ॥
निरञ्जनाव्यक्तमगम्यमेकं
तीर्थ्याः स्वरूपं तव माऽनुभूवन् ॥
श्रुत्वाऽपि ते नाथ गुणानतुल्या-
न्न देवतत्त्वं तु विदन्ति चित्रम् ॥ १४ ॥
जानासि विश्वं न च ते परोऽस्ति
ज्ञाताऽर्च्यसे त्वं जगता न तेऽर्च्यः ।
त्वमर्थ्यसे मुक्तिसुखं सुरेन्द्रै-
रप्यर्थ्यमास्ते न हि तेन चार्थ्यः ॥ १५ ॥
मनोदकं मोहमलाविलं मे
न केवलश्रीपरिभोगयोग्यम् ।
त्वद्ध्यानधीकातकचूर्णयोगा-
त्परां विशुद्धिं तदुपैतु नेतः ॥ १६ ॥
अनन्तसङ्ख्यस्य भवद्गुणाब्धेः

स्वपापराशेश्च न यामि पारम्।
ततो जगन्नाथ तथा प्रसीद
यथा तयोर्द्राक् तमुपैमि सम्यग् ॥१७॥
अनन्तपापैः पततो भवे मे
त्राता न कोऽप्यस्ति ततोऽतिखिद्ये।
आराध्यसे यैस्तु यथावदेषा-
मेकोऽसि पातेति मनाक् प्रमोदे ॥ १८ ॥
बिभेमि घोराद्भवदुःखराशे-
र्मोहं च तद्धेतुमलं न हातुम्।
त्रातुं ततोऽनन्यगतिं प्रभुर्मां
पार्श्व त्वमेकोऽसि कुरूचितं तत् ॥ १९ ॥
शरीरवप्रेषु मनोगृहेषु
प्रविश्य मोहारिकुलानि जीवान्।
गृह्णासि कैवल्यपुरेऽत्र हेतु-
स्तवारिषड्वर्गमुचः कृपैव ॥ २० ॥
चित्रं न तद्वर्णयितुं प्रभाव-

स्तवामरेन्द्रैरपि यन्न शक्यः ।
अनन्तमेतं यदनन्तशक्तिः
शक्नोति वक्तुं न जिनोऽपि पार्श्व ॥ २१ ॥
तव प्रभावाक्षयसेवधेर्नु-
लवान् गृहीत्वाऽम्बुनिधेरिवाब्दाः ।
स्वर्धेनुरत्नद्रुघटादयोऽर्थाः
प्रीणन्ति विश्वानि यथेष्टदानैः ॥ २२ ॥
घोरेऽधुना पार्श्व कलौ निदाघे
विम्नातपार्त्तानि सतां मनांसि ।
कथं शमाप्स्यंस्तव मूर्त्तिरेषा
न चेत्सुधाकुण्डनिभाऽभविष्यत् ॥ २३ ॥
स्तवीम्यधिष्ठायकवर्गमेतं
नागाधिराट्तद्दयिताऽऽद्यमीश ।
तवांह्रिभक्तव्यसनापहारे
साहायकं यः सततं तनोति ॥ २४ ॥
इत्थं स्तम्भनकावतंस भगवन् श्रीपार्श्व विश्वप्रभो

स्तुत्वा त्वां मुनिसुन्दरस्तव पदं याचेऽर्थिकल्पद्रुमम् ।
सम्प्राप्याशु भयान्यपास्य सकलान्यत्राप्यमुत्राखिल-
क्लेशातीतमनन्तमव्ययपरानन्दं पदं देहि मे ॥ २५ ॥

इति युगप्रधानावतारबृहत्तपागच्छाधिराजश्रीदेवसुन्दरसूरि-
श्रीज्ञानसागरसूरिश्रीसोमसुन्दरसूरिशिष्यैः श्रीमुनि-
सुन्दरसूरिभिर्विरचिते जयश्र्यङ्के श्रीजिनस्तोत्र-
रत्नकोशे प्रथमप्रस्तावे श्रीस्तम्भनकावतंस-
श्रीपार्श्वस्तोत्ररत्न अष्टमम् ।

---

॥ अर्हम् ॥

जयश्रीमन्दिरे सिद्धपुरे श्रीज्ञातनन्दनम् ।
चतूरूपं जिनं राजाविहारालङ्कृतिं स्तुवे ॥ १ ॥

जाने स्वरूपं न तव स्पृशन्ति
गिरः स्तुतिस्तेन कथं गुणानाम् ।
तथापि यत्नोऽत्र न मादृशोऽपि
विरुध्यते सोऽपि यतः फलाय ॥ २ ॥

अयं च भावः सम एव योगिना-
मपि प्रवृत्ताश्च न तेऽपि चात्र न ।
गतां महद्भिः पदवीं भजन् फलं
जिनैष कोऽप्याप्स्यति तद्वदेव तत् ॥ ३ ॥
अनुग्रहं वा कुरुतेऽपि मादृशा-
स्तवैकभक्तिप्रविलोकनग्रहः ।
स्तुतौ यदि स्याद् गुणदोषदृग् भवान्
कुतस्तदाऽऽशाऽपि फलस्य सम्भवेत् ॥ ४ ॥
सुखार्थिनः सर्वजनाः सुखं पुन-
र्न वै विशुद्धं व्यतिरिच्य निर्वृतिम् ।
विनाऽवसानौपयिकान्यथैष्विदं
परं सुसाधं च तदत्र यत्यते ॥ ५ ॥
द्विषन्नपि त्वां स्पृहयन् पदं परं
स्तवीति देवान्तरमीश यः कविः ।
तदस्य दूरे न विशीर्यते त्वयं
यदाशु देवास्तदहो प्रमादिनः ॥ ६ ॥

शिवश्रियो याः परमा भजन्ति ता-
स्त्वदंह्रिभक्तेर्जिन किङ्करीपदम् ।
नरामरेन्द्रादिरमास्तु तद्दशाः
श्रयन्ति तस्याः किमिवेति वेद कः ॥ ७ ॥
दधासि तोषं न न रोषविप्लवं
करोषि चिन्तामपि नैव कस्य चित् ।
बिभर्षि चाऽऽत्मैकगुणांस्तथापि ते
कथं प्रसादं स्पृहयन्ति पण्डिताः ॥ ८ ॥
त्रसन्ति युक्तं भवतः कुतीर्थिका-
हरादिकानां खलु ते हि सेवकाः ।
इमेऽपि मोहस्य जगद्विडम्बना-
पटीयसः सोऽपि यतस्त्वदत्रसत् ॥ ९ ॥
वपुर्धनायुःस्वजनाङ्गनादिकान्,
भवे पदार्थानखिलान् प्रदर्शयेत् ।
असारभूतानपि सारताजुषः
स्वसेवकान् योऽद्भुतसौचशक्तितः ॥ १० ॥

उपासितारोऽस्य विमोहमायिनो
ध्रुवं त्वदन्ये तदधीतशक्तयः ।
अतत्त्वरूपानपि तात्त्विकानिव
प्रदर्शयन्तेऽर्थगणान्निजाश्रवैः ॥ ११ ॥

॥ अर्थतोयुग्मम् ॥

भजेत यद्येन जिनास्वतन्त्रतां
तदीशता तद्विजयानुयायिनी ।
स्फुटे तवान्यस्य च मोहराड् जया-
जयार्पिते तज्जगदीशतेतरे ॥ १२ ॥

सुता विनेया अपि वीरसम्भवा
भवन्ति वीरा इति सर्वसम्मतम् ।
गिरोऽपि वीरस्य नु ते ऽतिवीरतां
भजन्ति विश्वाजितमोहनिर्जयात् ॥ १३ ॥

निरायुधः प्रोज्झितविग्रहः सभी-
र्भवद्विषो युक्तमगाः शिवं पदम् ।
जयं तु मोहस्य जगत्त्रयीजित-
स्त्वया कृतं वक्ति तवोक्तिरेव चेत् ॥ १४ ॥

सुधां त्वदीया व्यतियाय सूक्तयः
स्थिता रसैरत्र न कस्य संमतिः।
निपीय ता यद्विबुधाः सुधाशनां
दिवं न वाञ्छन्ति शिवैकचेतसः ॥ १५ ॥
श्रुतोऽपि धर्मः कुरुते धृतिं सतां
त्वयेरितोऽन्यैस्तु भयातुरां धियम्।
किमीक्षितोऽप्यातनुते जलाशयो
न शीतिमानं, ज्वलनश्च संज्वरम् ॥ १६ ॥
त्वयैव सत्त्वरमा वशीकृताः
परैर्यदृच्छाग्रहिलैर्विडम्बिताः।
वसत्यतो यत्र हृदि त्वमेव ता
वसन्ति तत्रैव विभो किमद्भुतम् ॥ १७ ॥
सतां भवक्लेशरुजां क्षयात् परं
न वै शुभानुष्ठितिषु प्रयोजनम्।
रसायनं तत्र तवैव चागम-
स्तदाऽऽभवं मेऽस्तु स एव सङ्गतः ॥ १८ ॥

स्तुवे मनः स्वं तदधीतनैपुणं
गुरोर्लवादप्यतुलागमस्य ते।
भवासुहृद्भीतिनिपातकातरं
भवन्तमेवोपजगाम यत्प्रभुम्॥ १९॥
इदं चतुर्द्वारविशालमण्डपं
निरीक्ष्य चैत्यं तव भारतोत्तमम्।
इमानि नन्दीश्वरकुण्डलादिगा-
न्यपीक्षितानीव विभावयेद् बुधः॥ २०॥
चतुःपुमर्थाद्भुतशर्म्मसाधनं
स्तुतं चतुर्ज्ञानसमृद्धिबन्धुरैः।
चतुर्गतिक्लेशविनाशहेतवे
चतुर्मुखं त्वां भगवन् प्रभुं भजे॥ २१॥
भवान् यया पश्यति संविदा जग-
द्भवत्स्वरूपं हि तयैव गम्यते।
तया समृद्धो भवतश्च नो पृथग्
ततो भवानेव भवद्गुणानवैत्॥ २२॥

कथं तदज्ञस्य भवद्गुणा गिरां
स्तवात्मिकानां विषयीभवन्तु मे।
तथाऽपि वाञ्छन् मणिमेव तत्प्रभा-
स्वपि प्रवृत्तः फलभागू यथा भवेत् ॥२३॥

अयं तथाऽर्थेषु गुणानुयायिषु
प्रवृत्तिमान् केष्वपि ते स्तुतिं सृजन्।
यथावदाप्ताऽपि गुणान् परं स्तुते-
स्तदा न कर्त्तेत्ययतेऽधुनाऽत्र तत् ॥ २४ ॥
॥ युग्मम् ॥

एवं सिद्धपुरप्रसिद्धनगरालङ्कार वीर प्रभो
भक्त्योद्यन्मुनिसुन्दरस्तवगणं स्तुत्वा स्वशक्त्या जिनम्।
याचे त्वां जगदिष्टसाधनपटो त्यक्तं भयैः सप्तभिः
श्रेयः शर्ममयं भवारिविजयश्रीसङ्गमान्मां कुरु ॥२५॥

इति युगप्रधानावतारबृहत्तपागच्छाधिराजश्रीदेवसुन्दरसूरि-
श्रीज्ञानसागरसूरिश्रीसोमसुन्दरसूरिशिष्यैः श्रीमुनि-
सुन्दरसूरिभिर्विरचिते जयश्र्यङ्के श्रीजिनस्तोत्र-
रत्नकोशे प्रथमप्रस्तावे सिद्धपुरस्थश्रीराजवि-
हारमण्डनश्रीवर्द्धमानस्तोत्ररत्नं नवमम्।

——०——

॥ अर्हम् ॥

जय श्रीमन्नाभिप्रभव भुवनत्राणशरण,
प्रदेलप्राकारक्षितिधरशिरोमौलिभवन ।
प्रभो भक्त्यायत्तीकृतशिवपदानन्दमहस-
स्तव स्तोत्रे यत्नं किमपि विदधे भक्तिविवशः ॥१॥
गुणानामानन्त्याक्रमनियमतश्चापि वचसां
न शक्ताः स्तोतुं त्वामपि हरिहरब्रह्मगुरवः ।
अवैमीति स्तुत्यां तव तदपि यत्नोऽयमुचितो
विचारं भक्तानां तिरयति विभौ भक्तिरिह यत् ॥२॥
मम ज्ञानं नास्ते करणरहितं त्वं च किमपि
स्वरूपं धत्सेऽर्हन् वृषभ करणातीतममलम् ।
कथाऽपीति स्तुत्यां क्व तव तदपि स्तोत्रपदवीं
लभे यस्या भक्तेरहमपि नवीमीशितारिमाम् ॥ ३ ॥
भवापायैस्तप्तं स्पृहयति जगन्निर्वृतिपदं
समग्रापायानां व्यपहृतिपटुश्चासि जगतः ।
फलावाप्तिर्दूरे तदपि किल यामेव हि विना

भवत्वेका सैव प्रथमजिन भक्तिस्त्वयि मम ॥ ४ ॥
विशुद्धा चेद्भक्तिर्भवति भवति प्रेष्ठफलकृत्
तदा किं स्यात्कृत्यं यमनियमदानप्रभृतिभिः ।
नृणां चिन्तारत्ने करतलगते नो यदुचिता
धनप्राप्त्यै नानौपयिकजनितक्लेशनिवहाः ॥ ५ ॥
योगाभ्यासे निविडजडिमा धीप्रवेशो न शाब्दे
ब्रह्मण्यात्मन्यपि न च लयो नानुभूतिस्तपस्सु ।
येषां दानाद्यपि न विदितं त्वत्पदद्वन्द्वभक्त्या
तेऽपि ज्योतिर्जिनवर परानन्दरूपं लभन्ते ॥ ६ ॥
त्वद्भक्त्या यद्भवति भविनां मर्त्यनाथामरेन्द्रा-
द्यैश्वर्याप्तिः स्पृशति हृदयं कस्य नेतस्तदेतत् ।
ज्योतिः किञ्चित्परममुनयोऽप्यर्थयन्ते तपोभि-
र्यद्योगाद्यैरपि तदपि यत्स्यात्करप्राप्तमस्याः ॥ ७ ॥
कुमारो भूपोऽभूज्जगदनुपमप्रौढिचरितो
भवेनैकेनैवामृतपदगमीयत्सुरभवात् ।
अणोरेकस्यैतत्तव जिन विभो भक्तिनिचये

न केषामाश्चर्यं जनयति फलं विश्वविदितम् ॥८॥
अरीन्निर्जित्योदध्यवधि भुवमात्मैकपतिकां
निवार्यानार्येष्वप्यखिलतनुमद्घातमनघाम् ।
मणीचैत्यैरुच्चैः सुभगवपुषं च व्यसनहृत्
स राजा त्वद्भक्त्याऽधिगतविभवो नाथ कृतवान्॥९॥
स गोविन्दः सङ्घाधिपतिरमलैश्वर्यविभवो
न केषां श्लाघाया व्रजति विषयं शुद्धमनसाम्।
तव प्रासादस्योद्धृतिकृतिमिषाद्येन कृतिना
समुद्दध्रे स्वात्मा भवजलधिपातोद्भवभयात् ॥१०॥
परं श्रेयः प्राप्य त्वमसि कृतकृत्यः स्वयमिदं
परेषां दातुं च प्रभवसि तदर्थाश्च कृतिनः।
भजन्तेऽतस्ते त्वां मुदितमनसः स्वार्थरसिका
जिनोपेयं शुद्धौपयिकवशतः स्याद्धिसद सत् ॥११॥
प्रगल्भन्ते दोषैः कलुषमतयः सिद्धिविभवं
न भोक्तुं दातुं वा न च विरहितस्तैस्त्वदपरः।
वृथा तत् क्लिश्यन्ते स्तवनविधिभिस्तस्य कुधियः

फलं नेष्टं यत्स्यात्सुलभमनुपायप्रणयिनाम् ॥१२॥
परानन्दास्वादे रसिकमनसः शुद्धमतयः
स चादृष्टप्लोषादयमपि च तत्त्वाधिगमतः।
स सम्यक् सिद्धान्तादयमुदभवच्चाखिलविद-
स्त्वमेवाद्यश्चैषामिति तव नुतौ बोधिद यते ॥ १३ ॥
जगत्प्राणिग्रासातुरवदनमृत्योर्भयजुषां
परब्रह्मानन्दामृतरसतृष्णैकमनसाम्।
व्यतीतक्लेशौघः परमपुरुषार्थाधिगतिमान्
सतामेकस्त्राणं त्वमसि शरणं चापि भगवन्॥१४॥
परं ज्योतिः किञ्चित्सकलविषयव्यापृतिमुचो
भवक्लेशावेशापरममतयः प्राप्तधृतयः।
विकल्पातीतं यत्परममुनयो ध्यानपदवीं
नयन्त्यस्मिन् रूपे तव जिन धियो मेऽस्त्वनुभवः॥१५॥
जगन्नानाऽवस्थास्थपुटितमिदं यत्परिणते-
रुदग्रक्लेशानां सहति भववासावधि ततीः।
निहत्यादृष्टारिव्रजमिममवापि त्रिभुवन-

प्रभुत्वश्रीस्त्रातस्त्रिजगदुपचक्रे च भवता ॥१६॥

प्रभुत्वं यत्पृथ्व्याः स्फुरति गतशत्रुव्यतिकरं
यदिन्द्राद्यैश्वर्यं यदपि शिवशर्मावधि फलम् ।
तदेतत्सर्वं ते क्रमयुगसपर्या प्रददती
स्पृहां स्वस्मिन् केषां सृजति न यतीनामपि विभो॥१६॥

कृपैव श्रेयःश्रीसमधिगातिकृत्तत्र न च सा
भवेद्यत्रारम्भोऽनुचरति स च ग्रन्थमुभयम् ।
ततो युक्तं त्यक्त्वा जलधिरसनां राज्यकमलां
प्रपन्नो नैर्ग्रन्थ्याश्रमममम धीस्त्वं शिवमगाः ॥१८॥

हरिब्रह्मेशेन्द्रादिषु विजयिनो यस्य विशिखा-
गताः कुण्ठत्वं नो नच समभवन्नेष्टफलिनः।
विपद्वल्लीकन्दस्त्रिभुवनजनत्रासजनको-
हतो मोहः साम्यादपि रिपुरयं नाथ भवता॥१९॥

समर्त्यामर्त्येन्द्रं जगदपि नयद् ग्रासविषयं
मम स्वामिन् भीतिं जनयति कृतान्तस्य वदनम्।
त्वमेवातस्त्राता त्रिभुवनगुरुस्तेन शरणं

श्रितस्त्वामेवाहं कुरु गतभयं मां करुणया ॥२०॥
अनादौ संसारे बहुलतमसा लुप्तमतिना
मया निन्द्यं कर्म्म व्यरचि बहुधा क्लेशजननम्।
इदं तत्सर्वं मे ऋषभ ऋषभेतीश जपतः
प्रणाशं यातु द्राक् शिवपदरमा च श्रयतु माम् ॥२१॥
न कामः कल्पद्रौ न च सुरमणौ नामरघटे
न विद्यायां मन्त्रे न हि न च सुराऽऽराधनविधौ।
त्वमेवैकस्त्राणं त्वमसि शरणं त्वं गुरुरतो
भवापायत्रस्ते मयि कुरु कृपार्द्रां जिन दृशम् ॥२२॥
नमस्तुभ्यं देवासुरमनुजनेत्राब्जरवये
नमो लोकालोकाकलनकुशलज्ञाननिधये।
नमस्तुभ्यं सर्वैर्हितसुखकृतिप्रीतिजगते
नमो विश्वापायव्यपनयविधिव्यग्रमनसे ॥ २३ ॥
स्तुत्वेत्यादिमदेवसुन्दरतरां भक्तिं दधत् त्वां मुदा
श्रीज्ञानाम्बुधिसूरिभिः स्तुतपदं ज्ञानाणुनाऽप्यन्वितः।
याचेऽहं गुरुसोमसुन्दरगुणव्याप्तत्रिलोकोदर-

द्वैधद्वेषिजयाश्रिया जिनपते श्रेयःश्रियः शाखतीः॥२४॥

एवं श्रीइलदुर्गभूषणमणिं श्रीमद्युगादीश्वरं
शक्रालीमुनिसुन्दरस्तवगणैर्नूतक्रमं यः स्तुते ।
सर्वाभीष्टसुखोच्चयैरविरतं स्फूर्जत्प्रमोदाढ्यो
मोहद्वेषि जयश्रिया स लभते श्रेयोऽचिराच्छाश्वतम् ॥२५॥

इति युगप्रधानावतारबृहत्तपागच्छाधिराजश्रीदेवसुन्दरसूरि-
श्रीज्ञानसागरसूरिश्रीसोमसुन्दरसूरिशिष्यैः श्रीमुनि-
सुन्दरसूरिभिर्विरचिते जयश्र्यङ्के श्रीजिनस्तोत्र-
रत्नकोशे प्रथमप्रस्तावे इलदुर्गालङ्कारश्रीऋषभ-
देवस्तोत्ररत्न दशमम् ।

---

॥ अर्हम् ॥

जयश्रीर्गर्भगे मातुर्यत्राभूदक्षदेवने ।
तिष्ठापयिषिते चात्र श्रीचौलुक्यमहीपतेः ॥ १॥
श्रीमत्तारणदुर्गस्थं श्रीमन्तमाजितं जिनम् ।
जगज्जैत्रेण मोहेनाजितं तं संस्तुवे मुदा ॥ २॥

॥ युग्मम् ॥

अशक्तपङ्क्तौ तव नाथ संस्तवे
सुरेश्वराद्या अपि नूनमासते ।
न तेऽपि कुर्वन्ति नतं स्वशक्तितः
शिवाशयेतीह ममापि सूद्यमः ॥ ३ ॥
विधीयमाना भगवन् गुणानां
स्तुतिस्तवाल्पाऽपि ददात्यभीष्टम् ।
सुधा यदल्पाऽपि निपीयमाना
नीरोगतां प्राणभृतां तनोति ॥ ४ ॥
अनन्तं ते ज्ञानं न पथि वचसां नापि च सुखं
न गम्यं ते रूपं न तव चरितस्याप्युपमितिः ।
गुणास्तेऽनन्तत्त्वाज्जिन न विषया वाङ्मनसयो-
र्न शक्यं स्तोत्रं तत्तव तदपि यत्नोऽत्र फलवान् ॥५॥
न विश्वासः प्रोक्तेऽह्यनिखिलविदा शुद्धमनसां
भवेन्मोहग्रस्तो न पुनरखिलं वेदितुमलम् ।
त्वदन्यो नामोहः प्रभवति तवैवागमनिधिं
भजन्ते याथात्म्यात्फलमपि लभन्ते च कृतिनः ॥६॥

नैकोऽपि दृश्येत सुरान्तरेषु यः
स्फुरन्त्यनन्ता अपि ते गुणास्त्वयि।
सुरद्रुमा ये बहवोऽपि नन्दने
भवन्ति सैकोऽपि मरौ किमाप्यते ॥ ७ ॥
न शस्यते कैः स कुमारभूपति-
स्तवात्र तीर्थामरवृक्षरोपणात्।
सतां भवक्लेशजदुःस्थताभयं
जहार यो मुक्तिगमी भवद्वयात् ॥ ८ ॥
कुमारपालस्य कथं न मित्रं
गोविन्दसङ्घाधिपतिर्भवेत्सः।
ग्रीष्मे कलौ म्लेच्छदवाग्नितापै-
स्तन्न्यस्तबिम्बापगमेन शुष्कम्॥ ९ ॥
पुण्यद्रुमं तस्य नवत्वदेत-
द्विम्बप्रतिष्ठापनतस्तदर्थैः।
जलप्रवाहैः किल योऽभिषिच्य
प्रभोऽधुना पल्लवयाञ्चकार ॥ १० ॥
॥ युग्मम् ॥

श्रीहेमचन्द्रगुरुमिद्धगुणैः परं न
श्रीसोमसुन्दरगुरुप्रभवोऽनुकुर्युः ।
किं तु त्वदीयनवबिम्बमहाप्रतिष्ठा-
कृत्यैरपीश दलितोग्रकलिप्रभावैः ॥ ११ ॥

प्रभो तवैतैर्विविधैः प्रतिष्ठा-
महोत्सवैर्नेत्रपथं प्रपन्नैः ।
जनिव्रतज्ञानमहान् पुराणान्
प्रत्येति कस्तान्न स चेतनोऽपि ॥ १२ ॥

भवाम्बुधेस्तारणतो द्विधाऽरि-
भीतिक्षितेस्तारणदुर्ग एषः ।
संसर्गतस्ते त्वमिवाजितेश
नगोऽपि जज्ञे किल सान्वयाह्वः ॥ १३ ॥

संसारतृष्णोग्रकषायताप-
चिरार्जिताद्दृष्टमलप्रणाशैः ।
अर्थैस्त्रिभिर्नायकभावतीर्थ-
माराधितं मुक्तिमिदं तनोति ॥ १४ ॥

---

१ गणेति पाठान्तरम् ।

द्विधाऽपि शत्रून् जितशत्रुजन्मा
जित्वा भवान्निर्वृतिमाप युक्तम् ।
ख्यातस्तु चित्रं विजयाङ्गजोऽपि
भक्तेषु भूमिर्विजयोद्भवस्य ॥ १५ ॥

कथं नु सम्यक् तव दर्शनाय
बुधा यतन्तेऽपि तपस्क्रियाऽऽद्यैः ।
जातं हि तद्यस्य न तस्य रूपं
विलोकते कश्चन लोचनाभ्याम् ॥ १६ ॥

अनादिमिथ्यात्वतमःप्रणाशतः
सुतत्त्वरत्नप्रकरप्रकाशतः ।
शिवप्रदं तात जगत्सुखाकरं
त्वमागमं दीपमदीदिपः स्थिरम् ॥ १७ ॥

अनन्तमोहप्रभवं निरस्य
विकल्पजालं भवपातहेतुम् ।
त्वदागमार्थामृतपानशर्म-
लीनं मनो मेऽस्तु तव प्रसादात् ॥ १८ ॥

स्थेष्टेऽदृष्टप्रतिभुवि विभौ शक्नुयां नातिगन्तुं
मोहस्याज्ञां स च तनुमतामर्दनैकस्वभावः ।
औदासीन्यं भजसि भगवंश्चेत्तदाऽऽज्ञावशेऽत्रा-
नन्यत्राणे त्रिजगति कथं तद्भविष्याम्यहं ही ॥१९॥

भक्ता यद्यपि सन्ति तेऽत्र बहवः प्रौढाः सुरेशादयो
ऽङ्कं न्यस्य तथापि मामपि विभो पाल्यत्वचिन्ताऽध्वनि ।
भीष्मग्रीष्मखरातपार्दिततनूनासारतोऽद्रीन् यथा
शैत्यं प्रापयतेऽम्बुदः किमु तथा नो वालुकायाः कणान्॥२०॥

मोहेनास्मि वशीकृतो जिन भजे सम्यक् तवाज्ञां न चेत्
को दोषो मम तत्तवैव महिमा ह्येवं कलङ्कं श्रयेत् ।
भूतेन ग्रहिलीकृतो न कुरुते तत्सेवकः कोऽपि चे-
द्दत्ताज्ञां किल दूषणं सुमहतस्तन्मान्त्रिकस्यैव यत् ॥२१॥

तत्त्वं श्रीअजित प्रसीद तमरिं निर्जित्य मोहं तत-
स्तायिन्मोचय मां पदं नय निजं स्वं सेवकं भाक्तिकम् ।
किं तस्य प्रभुता प्रभोर्न ददते भक्तस्य यो वाञ्छितं
युक्ता तेऽर्हविचारणा ननु जगत्त्राणैकसन्धाभृतः ॥२२॥

किं भक्तः स नयः प्रभुं वशयितुं शक्नोति भक्त्याऽऽत्मनः ।
॥ पाठान्तरम् ॥

तदर्थये तात मुहुर्मुहुस्त्वां
त्रैलोक्यचिन्तामणिमेकमेवम् ।
प्रदेहि किञ्चिन्मम तत्पुनर्न-
येनार्थये त्वामपरं च नाथ ॥ २३ ॥

न कः स्तुते तारणदेवि भक्त-
विपत्सरित्तारणकर्मठे त्वाम् ।
पासि प्रतीता रणनिर्जितारि-
र्या तीर्थमेतज्जिनभाक्तिकांश्च ॥ २४ ॥

एवं तारणदुर्गभूषणमणेः कृत्वा स्तवं ते मुदा
दृष्ट्वा प्राग्मुनिसुन्दरस्तुतिततीर्बालस्वभावादहम् ।
याचे श्रीअजितप्रभो भवरिपुक्षेपाज्जयश्रीप्रदां
शुद्धां बोधिरमामनन्तमचिराच्छ्रेयो लभेऽहं यया ॥२५॥

इति युगप्रधानावतारबृहत्तपागच्छाधिराजश्रीदेवसुन्दरसूरि-
श्रीज्ञानसागरसूरिश्रीसोमसुन्दरसूरिशिष्यैः श्रीमुनि-
सुन्दरसूरिभिर्विरचिते जयश्र्यङ्के श्रीजिनस्तोत्र-
रत्नकोशे प्रथमप्रस्तावे श्रीतारणदुर्गालङ्कार-
श्रीअजितस्वामिस्तोत्ररत्नं एकादशम् ।

॥ अर्हम् ॥

जय श्रीमन्नागह्रदपुरवरालङ्कृतिमणे
जिनेन्द्र श्रीपार्श्व त्रिभुवननुतानन्तमाहिमन् ।
तव स्तोत्रं कुर्वे फणिफणमणीद्योतितपद
प्रभो पद्मावत्यार्चित शिवफलं प्राप्तुममलम् ॥१॥

सृजन्ति यं दिव्यदृशो महर्षय-
स्तवं विभो तेऽहमपीममाद्रियै ।
तिमिङ्गिलाद्या यमुपासतेऽम्बुधिं
भजेत यत्पूतरकोऽपि तं न किम् ॥ २ ॥

गुणांस्तवैतान् भगवन्ननन्तान्
न मन्यते कः सुविमर्शदर्शी ।
कालं ह्यनन्तं न बुधैरनन्तै-
र्यैं गृह्यमाणा अपि यान्ति हानिम् ॥ ३ ॥

गुणाननन्तानपि ते यथा यथा
गृह्णन्त्यभिज्ञा निदधत्यथो हृदि ।
तथा तथा निर्गुणतां भजन्त्यहो

स्वस्यापि सत्त्वादिगुणत्रयोज्झनात् ॥ ४ ॥

ध्रुवं गुणैस्ते युगपत्त्रिलोकी
भृता समग्रा कथमन्यथाऽमी ।
लभ्या लसन्तो नृसुरासुराणां
हृत्कर्णवक्त्रे परितः सदाऽर्हन् ॥ ५ ॥

ऊरीकृताः साधु निराश्रयास्त्वया
गुणा ह्यनन्ता अपि तायिनाऽखिलाः ।
यस्यास्पदं विश्वकृतो हरादय-
श्चिन्ता पुनर्दोषगणस्य तस्य का ॥ ६ ॥

स्तुतः शिवायापि भवान् भदन्त !
भवेन्नचार्थाय परोऽणवेऽपि ।
सर्वैर्हितायापि तरुः सुराणां
सिक्तः फलायापि नचावकेशी ॥ ७ ॥

बुधा भवाद्बिभ्यति ये जनास्थिति-
क्षयैः कथं नाथ तदेककर्मणः ।
भजन्ति तेऽर्हन् विधिविष्णुभैरवा

न तन्नयस्तत् शरणं त्वमेव नः ॥ ८ ॥
मूर्त्तिः प्रभो ते नवखण्डरूपा,
सुखश्रियो यज्जनयत्यखण्डाः ।
नताः स्मृता वा महितेति हेतोः
कार्यै गुणक्रान्तिमतं भिनत्ति ॥ ९ ॥
धत्से परानन्दमयं किलैकं
रूपं त्वमर्हन्निह को विवादः ।
तेनैकतां येन हृदा दधाना
बुधाः परानन्दमया भवन्ति ॥ १० ॥
अन्तःकषायज्वलनेन देवाः
सन्ति ध्रुवं तापमयास्त्वदन्ये ।
संस्पर्शमात्रादपि येन तेषां
सतां लभन्ते हृदयानि तापम् ॥ ११ ॥
मुखं नु लावण्यसुधासरस्ते
विश्वोपकाराय चकार वेधाः ।
दृशस्त्रिलोक्या अपि यत्र मग्नाः

शैत्यं सदाऽऽनन्दमयं श्रयन्ति ॥ १२ ॥
अक्षय्यकोशस्त्वमनन्तशर्म्म-
श्रियां ध्रुवं विश्वजनोपकारी ।
दत्से त्रिलोक्याः स्मृतिवन्दनाद्यैः
सदैव ताः स्वेन च हीयसे न ॥ १३ ॥
त्वद्दर्शनेन प्रभवन्ति येषां
नेत्रेषु हर्षाश्रुजलप्रवाहाः ।
तेषां प्रशाम्येद्भवदुःखदावः
कल्याणवल्ल्यश्च जिनोल्लसन्ति ॥ १४ ॥
त्वद्दर्शनं नाथ कथं गृणन्ति
मनीषिणोऽभीष्टफलप्रदायि ।
लब्धे हि तस्मिन् सुधियां फलं
स्यात् सानिष्टसर्वेष्टनिवृत्तिरेव ॥ १५ ॥
जज्ञेऽश्वसेनाधिपतेरपीश
युक्तं सुरेन्द्रैः स्तुतता पितुस्ते ।
क्षारोऽपि रत्नव्रजजन्मनाऽब्धिः

स्तूयेत रत्नाकर इत्यमर्त्यैः ॥ १६ ॥
योषा सुरेखा त्रिदशेश्वरैः स्तुता
वामाऽप्यवामा जगतोऽपि साऽभवत् ।
प्रसूय या त्वां जिन विश्वबोधकं
रविं दिगैन्द्रीव सुखाचकार तत् ॥ १७ ॥
अचिन्त्यदानैर्लघिमानमर्हन्
नीतास्तथा कल्पनगास्त्वयाऽत्र ।
यथा किलोत्पाट्य समीरणेन
क्षिप्ता रजोवन्निखिलाः सुमेरौ ॥ १८ ॥
चलाचलत्वं भाविनो भजन्ते
यात्राकृते पार्श्वविभो तवाऽर्हन् ।
सुखश्रियस्ते त्वचला लभन्ते
गुणाय दोषोऽपि हि ते प्रभावात् ॥ १९ ॥
स्वस्योदरे वा शिरसि स्थितान् वा
क्षमाभृतः पान्ति परेऽरिभीरून् ।
हृदि प्रविष्टः शिरसा धृतो वा

त्वं पासि तान् नाथं नवः क्ष्माभृत् ॥ २० ॥
तव त्रिलोक्यां महिमा चकास्ति य-
स्तदर्पिताकर्षवशात्समारति ।
समन्ततः पार्श्व नरामरासुरा-
स्त्वदर्चनार्थं भगवन्निहानिशम् ॥२१॥
न सम्प्रतिं तं नृपतिं स्तवीति कः
सुखाकृता येन जगज्जनाः सदा ।
श्रीपार्श्व विश्वेहितशर्मदायक
त्वत्तीर्थकल्पद्रुमरोपणादिह ॥ २२ ॥
स्तम्भनात्याज्ञा तव हरिकरिव्यालवह्नयर्णवादीन् ।
स्तोत्रं किं तद्वहति मघवाऽप्युत्तमाङ्गे यदेताम् ।
शम्भुर्धत्ते शिरसि सरितं जह्नुजां यां किमस्या
माहात्म्योक्तिः शिशुगणपदोल्लङ्घनाशक्यतायाम् ॥२३॥
एवं त्वं नुतपादपद्ममयका श्रीपार्श्वनाथार्थ्यसे
नागेन्द्रस्तुतसोमसुन्दरयशाः पद्मावतीपूजित ।
नाम्ना यन्मुनिसुन्दरत्वमविदां तादृक् तदेवातनु-

स्याद्वावारिजयश्रिया मम यतः श्रेयोऽचिराच्छाश्वतम्२४

इति युगप्रधानावतारबृहत्तपागच्छाधिराजश्रीदेवसुन्दरसूरि-
श्रीज्ञानसागरसूरिश्रीसोमसुन्दरसूरिशिष्यैः श्रीमुनि-
सुन्दरसूरिभिर्विरचिते जयश्र्यङ्के श्रीजिनस्तोत्र-
रत्नकोशे प्रथमप्रस्तावे नागह्रदभूषण-
श्रीपार्श्वजिनस्तोत्ररत्नं द्वादशम्।

॥ अर्हम् ॥

जयश्रीः संश्रयेद् यस्य स्तोतॄन् द्वेधाऽरिनिर्जयात्।
तं श्रीपार्श्वप्रभुं स्तौमि फलवर्द्धिविभूषणम् ॥ १ ॥
आरोग्यायुर्विभवविभुताभोगसद्बुद्धिरूप-
श्रेयःश्रेणिप्रणयविनयाद्याढ्यपुत्रादिलाभाः।
यत्पूजा स्वर्व्रततिजनुषां वर्णिका, स्यात्फलाना-
मत्राप्याप्या स भवतु सतामिष्टकृत्पार्श्वदेवः ॥२॥
साम्राज्यश्रीर्गतरिपुभया चक्रिणो वा समृद्धि-
र्देवेन्द्रादित्रिदशपदवी साऽपि चार्हन्त्यलक्ष्मीः।

सम्पन्मुक्तेरपि च सुलभा ध्यायतो यत्पदाब्जं
स श्रीपार्श्वः सृजतु हृदये मे निवासं सदाऽपि ॥३॥
दत्सेऽत्रापि त्रिभुवनविभुस्त्वं पुमर्थत्रयाप्तिं
प्रेत्य त्रैधं हरसि कृतिनां सर्वसंसारदुःखम् ।
तेन त्राणं सकलजगतां त्वां त्रियोगीविशुद्धा
क्लेशव्यूहव्यपगमकृते नाथमेकं प्रपद्ये ॥ ४ ॥
भूम्यन्तर्गतवर्यदेवकुलिकासंस्थां स्रवन्तीं पयो
दृष्ट्वा स्वां सुरभिं चमत्कृतमना ज्ञात्वा सुराऽऽदेशतः ।
श्राद्धो यत्प्रतिमां फणालिरुचिरां प्राचीकटद्धान्धलः
स श्रीमान् फणवर्द्धिभूषणमणिः पार्श्वप्रभुः पातु माम्॥५॥
देवादेशात्तव जिनपते कार्य्यमाणेऽत्र चैत्ये
श्राद्धाग्रण्या शिवकरयुजा तेन चाल्पर्द्धिनाऽपि ।
निष्पन्नेऽस्यादिमवरमहामण्डपेऽथाग्रतस्त-
त्सिध्यै यावद्द्रविणविरहाज्जग्मतुस्तौ विषादम् ॥ ६ ॥
तावत्प्रातर्जिन तव पुरः स्वस्तिकं रूपकाणां
वीक्ष्यादायामरवरगिरा प्रत्यहं चैवमस्मात् ।

द्रव्यादेतौ सकलमतुलं मण्डपैः पञ्चभिस्तं
प्रासादं ते कतिपयदिनैः कारयामासतुर्द्राक् ॥७॥
तत्पुत्रैः स्वागमनविषयोत्पन्नसन्देहचित्रै-
श्छन्नालोकादथ च विदिते तत्स्वरूपे तदादि।
कालं ज्ञात्वा न धनममराः पूरयामासुरेवं
प्रासादोऽर्हंस्तव स तदियानेव तस्थौ विराजन् ॥८॥

॥ विशेषकम् ॥

एकादशस्वब्दशतेष्वशीत्याऽ-
धिके११८०ष्वतीतेष्वथ विक्रमार्कात्।
प्रतिष्ठितं चैत्यमिदं यदीयं
प्रभुः स जीयात्फलवर्द्धिपार्श्वः ॥ ९ ॥
बाह्यान्तरवैरिवारविजयी निस्सीममाहात्म्यभृ-
न्निर्वाणावधिसर्ववाञ्छितसुखश्रीदानदीक्षाचणः।
स्वामिन्निष्प्रतिबिम्ब एव चरितैरेकोऽसि विश्वेऽप्यतो
नाधिष्ठायकदेवता इह परं बिम्बं सहन्ते किल ॥१०॥
श्रान्तः कामितदानतः सुरगणः कल्पद्रुवर्गोऽपि वा

नेशुर्यत्र पुनः प्रभावविभवा मन्त्रौषधानामपि।
एकोऽसीप्सितदस्त्वमेव भगवंस्तस्मिश्चतुर्थे युगे
ग्रीष्मे शुष्यति यज्जलाशयततिर्वार्द्धिः पुनर्गर्ज्जति॥११॥
धन्योऽहं जिन मे फलेग्रहि जनुः श्लाघ्या निशैषैव च
स्वल्पीयोऽपि तपो जपादि च निजं मन्ये सदुच्चैः फलम्।
मूर्त्तिं नीलमणीमयीं दधदभूर्यत्सप्रसादोदितः
साक्षात्त्वं फलवर्द्धिमण्डन मम श्रीपार्श्व नेत्रोत्सवः॥१२॥
त्वं मूर्त्तिं विमलां दधन्निशि यथा स्वप्ने प्रसन्नः प्रभुः
साक्षाद्भाग्यवशादभूर्विजयितां मे भाविनीमादिशन्।
अध्यक्षानुभवास्पदं भव तथा सद्यः प्रसद्याधुना
निर्द्देहोऽपि च जागरेऽपि भगवन् श्रेयःपदं स्यां यथा॥१३॥
देवानां किल कुम्भपादपमणींस्त्वन्मूर्त्तिकार्ये सृजन्
श्रीमत्पार्श्वविभो चकार विशदोपादानहेतून् विधिः।
दृश्यन्तेऽत्र समग्रवाञ्छितमहादानादयस्तद्गुणा-
स्ते च क्वापि न साम्प्रतं नयनयोर्यद्गोचरं बिभ्रते॥१४॥
सौख्यं नैरयिकेष्वपि स्वजनुषा कृत्वा तथाऽब्दं भुव-

स्त्वं दारिद्र्यमपास्य वाञ्छितमणिस्वर्णादिवर्षैः पुरा।
प्रव्रज्योदितकेवलस्त्रिजगतो हत्वोपदेशैर्भवा-
पायान् प्राप्तशिवोऽधुनाऽपि ददसे पार्श्वेहितानि स्मृतः॥१५॥
विघ्ना नश्यत, दूरमेव लघु रे रोगव्रज त्वं व्रज
क्षीणाऽस्याशु दरिद्रतेऽद्य विलयं यातोऽसि दुःखोच्चय।
हे संसार तवाद्य पारमगमं कर्म्मौघ ते मोघता
यज्जज्ञे त्रिजगत्प्रियाकृतिचणः पार्श्वोऽद्य नेत्रातिथिः॥१६॥
नागेन्द्रस्तनुते सुखानि धरणः पद्मावतीसम्पदो
वैरोट्या हरते च विघ्ननिचयं सर्वेऽनुकूला ग्रहाः।
स्युर्देवाः सकलाः प्रसादविशदा दुष्टाः प्रणष्टौजसो-
ध्यानाद्यस्य, मनोऽधितिष्ठतु स मे श्रीपार्श्व विश्वेशिता॥१७॥
ये शक्ता न तपो विधातुमतुलं शीलं न धर्तुं तथा
नो योगे प्रभविष्णवो वितरणे नो न व्रतादिष्वपि।
तेषामप्यभिवाञ्छतां शिवसुखं भाग्यैर्हृदि त्वं स्थित-
स्तद्दाने प्रतिभूपदं प्रदधसे श्रीपार्श्व विश्वप्रभो॥१८॥
ते धन्या भुवनेषु संस्तुतिपदं तेषां जनुर्ज्जीविते

सर्वास्ते स्ववशा व्यधुः सुखरमाः पारत्रिकीरैहिकीः ।
नूनं ते च कटाक्षिताः परमया कैवल्यशर्मश्रिया
श्रीपार्श्वेश तव क्रमाम्बुजयुगं यन्मानसे तिष्ठति ॥१९॥
यन्माहात्म्यमहानिधेः कतिपयांस्त्रैलोक्यकुक्षिंभरे-
रादायेव लवान् सुरामरमणिस्वर्धेनुकुम्भादयः ।
पाथोदा इव वारिधेर्जलभरान् विश्वं प्रियाकुर्वते
रातु श्रीफलवर्द्धिसंस्थितिरयं श्रेयांसि पार्श्वप्रभुः ॥२०॥
तं श्रीपार्श्वविभुं भजे त्रिभुवनाभ्यर्च्यांह्रिपङ्केरुहं
शीर्षे यस्य फणाः प्रभामणिकरोन्मिश्राः प्रसर्पन्ति खे ।
कर्म्मैधांसि जगत्त्रयस्य दहतः सेवाऽऽगतप्राणिनां
धूम्यायास्तुलयन्ति या हुतवहज्वालोज्ज्वलायाः श्रियम् २१
धत्ते कल्पलताः स्वमूर्त्तिशिरासि प्रोद्यन्मणीपल्लवाः
सप्ताहीन्द्रफणाच्छलात्त्रिजगतीभीतीः क्षिपन् सप्तधा ।
सप्तद्वीपसमि[1]यूदङ्गिनिकराभीष्टार्थदानाय यः
संसाराम्बुधिसेतवेऽस्तु विभवे पार्श्वाय तस्मै नमः ॥२२॥

---

१ समागतेति च पाठः ।

शब्दातीतमनन्तसद्गुणमयं व्यावृत्तिमद्भिश्चतो
यत्ते तत्त्वमनक्षषट्कविषयं देव प्रतिष्ठाचणम्।
यत्तद्भिप्रलपन्निह स्तुतिधिया न स्यां कथं वातकी
पूर्वाप्तानुगमात्तथाऽप्ययतिषि स्वामिन् फलार्थादिति ॥२३॥

स्तुत्वेति पार्श्व फलवर्द्धिविभूषणस्य
पादद्वयं प्रणतसन्मुनिसुन्दरं ते।
याचे भवारिविजयश्रियमीश यस्यां
स्यां नित्यविस्फुरदनन्तसुखोदयात्मा ॥ २४ ॥

इति युगप्रधानावतारबृहत्तपागच्छाधिराजश्रीदेवसुन्दरसूरि-
श्रीज्ञानसागरसूरिश्रीसोमसुन्दरसूरिशिष्यैः श्रीमुनि-
सुन्दरसूरिभिर्विरचिते जयश्र्यङ्के श्रीजिनस्तोत्र-
रत्नकोशे प्रथमप्रस्तावे श्रीफलवर्द्धिमण्डन-
श्रीपार्श्वनाथस्तोत्ररत्नं त्रयोदशम्।

—— ० ——

॥ अर्हम् ॥

जयश्रीविलासालयं सर्वदेवा-
सुराधीशसंसेव्यपादारविन्दम् ।
जगन्नायकं दायकं ब्रह्मलक्ष्म्याः
स्तुवे श्रीजिनं वर्द्धमानाभिधानम् ॥ १ ॥
प्रभो मङ्गलं शाश्वतं संस्तवस्ते
समाकर्षणं सम्पदां सर्वतोऽर्हन् ।
धृतिः कान्तिकीर्त्ती महत्वं प्रतिष्ठा
सुखं चेति तस्मिन् प्रयत्नं विदध्याम् ॥ २ ॥
युगेऽस्मिन्निशीथेऽपि मोहापनोदात्
प्रकाशाय मोक्षाध्वनोऽदीदिपद्यः ।
स्थिरं विश्वविद्योति सिद्धान्तदीपं
नमो वर्द्धमानाय तस्मै जिनाय ॥ ३ ॥
अभीष्टं त्वदीयागमार्थेक्षणाना-
मुपेयं परानन्दशर्मैव नेतः ।
उपायस्तु तस्य त्वदाज्ञैव सम्यक्

प्रदेहीति तामेवं शुद्धां ममार्हन् ॥ ४ ॥
ध्यायन्ति ये नाथ पदद्वयं ते
पदद्वयं ते सुधियो लभन्ते।
महोदयं वा सुमनोमनो वा
सदेव दाता हि पदं ददाति ॥ ५ ॥
जगत्त्रयत्राणचणे प्रभौ मे
त्वयि प्रपन्ने न भयं कुतोऽपि।
विश्वप्रकाशप्रवणे रवौ य-
न्न सेव्यमाने तमसोऽवकाशः ॥ ६ ॥
अतिशीतिसमृद्धिरद्भुता
तव संविद्धिभवश्च सर्वगः।
भुवनोपकृतौ प्रगल्भसे
कृतकृत्यः स्वयमीश तत्सुखम् ॥ ७ ॥
न च रुष्यसि नापि तुष्यसि
प्रभुता काऽपि तथाऽपि तेऽद्भुता।
अपि सर्वसुरासुरेश्वरा

न यदाज्ञां तव लङ्घयन्त्यहो ॥ ८ ॥
त्रिजगन्निजजन्मनाऽप्यहो
युगपत्त्वं यदलम्भयः सुखम् ।
अतिभक्तिभृतेऽपि तोषितै-
र्ददितुं तन्न परैः प्रगल्भ्यते ॥ ९ ॥
यदनन्तमुपाधिमुक् परं
भवतो ब्रह्म न तत्र साक्षिणः ।
यदिह त्वयि लीनचेतसा-
मनुभूतौ तदपि त्रिलोकाजित् ॥ १० ॥
जिनेश यैश्वर्यरमा हरादिषु
प्रकल्पिता सा मघवादिषु त्वणुः ।
पतिस्त्रिलोक्याश्च परो न वर्त्तते
तया तवैवेत्युपमोपमेयता ॥ ११ ॥
त्वया परब्रह्मरसः प्रदर्शितः
स कोऽपि सिद्धान्तसरोवरे प्रभो ।
मनो झषाणां सुधियां यमश्नतां

सुखं भ्रमो भाति सुधाभुजामपि ॥ १२ ॥
कृतापराधेष्वपि यास्तवाभवन्
विभोऽनुकम्पारससंभृता दृशः ।
प्रयच्छ ता एव मयीयतैव यत्
करस्थितां वेद्मि जगत्त्रयेशताम् ॥ १३ ॥
कुबोधदुष्कर्म्मविपद्वियोजनात्
समीहिताशेषसमृद्धियोजनात् ।
जगत्प्रभो धर्मसुरद्रुरोपणात्
त्वया कलावप्यनुकम्पितं जगत् ॥ १४ ॥
तावकं पावकं यस्य पादाम्बुजं
वा समासादयत्यङ्गभाजो हृदि ।
तस्य सौरभ्यलुभ्यद्द्विरेफा इव
श्रीभरास्तं जहत्येव नो कर्हिचित् ॥ १५ ॥
त्वां त्रिलोकीजनत्राणदीक्षागुरुं
शाश्वतश्रीप्रद ये भजन्ते विभो ।
तानुपद्रोतुमीशा द्विधा नारयः

पद्ममंशोः करस्थं तुषारा इव ॥ १६ ॥
स्तूयमानास्त्वदन्ये गुणैः कल्पितै-
नैंव दातुं क्षमन्ते शिवं प्राणिनाम्।
दुह्यमानाः प्रयत्नेन किं धेनवो
लेप्यमय्यः प्रयच्छन्ति दुग्धं प्रभो ॥ १७ ॥
ध्यातमात्रोऽपि विश्राणयस्येव तु
त्वं फलं वाञ्छितं मोक्षसौख्यावधि।
याचितः कल्पवृक्षोऽपि दत्ते न य-
द्वस्तु विश्वे तदप्यस्ति किं किञ्चन ॥ १८ ॥
अस्ति ते सुखसमृद्धिरनन्ता
तां च सेवकगणाय ददासि।
त्वामजस्रमिति सेवितुमीहे
रोधकं तु हर मेऽत्र कुकर्म्म ॥ १९ ॥
यस्य जन्मनि जगत्त्रितयस्या-
प्युत्सवाद्ध्यमयं दिनमासीत्।
सारमायुषि तदेव समग्रे

त्वं स पाहि भगवन् भवतो माम् ॥ २० ॥
चेत्कषायकलुषे मम चित्ते
त्वं करोषि विमलो न हि वासम्।
तत्करोतु तदिमं त्वयि नित्यं,
सिद्धमिष्टमियताऽपि ममेश ॥ २१ ॥
सन्ति नाथ बहवोऽपि मदाद्या
नाम येऽत्र दधतेऽन्वयशून्यम्।
वर्द्धमान भव सान्वयनामा
देहि मे तदनुरूपसुखानि ॥ २२ ॥
त्वत्समोऽस्ति न परोऽत्र कृपालु-
र्मत्समश्च न कृपाऽऽस्पदमन्यः।
द्वाविमौ च मिलितौ मम पुण्यै-
रग्रतो यदुचितं तदवेहि ॥ २३ ॥
एवं मया स्तुत जगत्प्रमदार्णवैक
श्रीसोमसुन्दरतमर्द्धिद वर्द्धमान।
देयाः पदं नतमहामुनिसुन्दरं मे

ऽनन्तैः सुखैर्जिन भवारिजयाश्रियाऽऽप्यम्॥२४॥

इति युगप्रधानावतारबृहत्तपागच्छाधिराजश्रीदेवसुन्दरसूरि-
श्रीज्ञानसागरसूरिश्रीसोमसुन्दरसूरिशिष्यैः श्रीमुनि-
सुन्दरसूरिभिर्विरचिते जयश्र्यङ्के श्रीजिनस्तोत्र-
रत्नकोशे प्रथमप्रस्तावे श्रीमहावीरमङ्गलशब्दा-
र्थस्तोत्रमष्टम्यादौ मङ्गलार्थं भणनीयं
स्तोत्ररत्न चतुर्दशम् ।

---

॥ अर्हम् ॥

जयश्रियं यः सकलान्तरारि-
जयैषिणां भावभृतां तनोति ।
नवीमि तं वीरजिनं मुदाऽहं
महोदयानन्तसुखैकहेतुम् ॥ १ ॥
समीहिताशेषसुखौघकारी
करोषि वासं हृदि मे यदीश ।
अहो तदेषोऽपि जनो दधाति
वीराधिकारं विनुतौ तवापि ॥ २ ॥

बिभेति यो घोरभवाम्बुराशितः
    समीहते वा शिवसातसम्पदः ।
लभेत नोपायमयं परं यतो
    भवन्तमेवेति निषेवते सुधीः ॥ ३ ॥
लसन्ति पुंसां सुखसम्पदोऽखिला
    भजन्ति नाशं सकला भियः पुनः ।
तवैव पादाम्बुजवन्दने रतः
    को नेहते तानि कृती कलावपि ॥ ४ ॥
हितानि वाञ्छन्ति, तदेककारणं
    भवन्तमीशं न भजन्ति चादृताः ।
उपायहीनाः सदुपेयरागिणो
    वृथा विषीदन्ति जडा हहा परे ॥ ५ ॥
तपांसि तेषां खलु देहदण्डनं
    वृथैव योगागमसङ्गमादराः ।
शुभाय नैवापि कुदेवसेवना
    भवन्तमीशं किल ये न जानते ॥ ६ ॥

भवन्ति वै तावदमी भवामया,
महालया देव भयाय देहिनाम्।
रसायनाभानि वचांसि ते मुने
भजन्ति नो यावदिमे कृतादराः॥ ७॥
अपारयन्तो भवदागमोदितं
विधिं विधातुं विषयाभिलाषिणः।
मनोऽनुकूलं कुमतानि ये गिरा
परे भजन्ते कुधियां शिवाशया॥ ८॥
विरागभाजो भिषजोदिते कटौ
महौषधौघे मधुरैकरागिणः।
ते लान्ति किम्पाकफलानि मोहिता
रिपूपदेशेन निरामतेहया॥ ९॥
मनोहरानन्तसुखौघसम्पदां
तवैव सेवा दधते निदानताम्।
परेऽपि जानन्ति विचारणादिदं
तदेव तेषां हरते तु मूढता॥ १०॥

तनोति नो भाविशिवेन्दिराणां
विना भवन्तं किल कोऽपि मोदम् ।
ऋते दिनेशं कमलाकराणां
विबोधमाधातुमलं नु को वा ॥ ११ ॥
वाणी नृणां वीर विभो तवैव
मोहान्धकारं नयते विनाशम् ।
न जाङ्गुलीजापमृते महाहि-
गरो विलीयेत जनाङ्गसङ्गी ॥ १२ ॥
तमो यदन्तं न हि नेतुमीशते
विधोः करा नापि दिनेशितूरुचः ।
शरीरभाजां तदपीदमान्तरं
जिनेश वाचो लघु नाशयन्ति ते ॥ १३ ॥
भजान्ति ते वीर विभो कथं गिरः
सुधारसेनोपमितिं मनीषिताः ।
भवाघतापं मरणं जरां च या
हरन्ति चेतोविषयीकृता अपि ॥ १४ ॥

स कोऽपि दीपो भवताऽऽगमाङ्कवा-
नदीपि नैकान्तमतावलम्बनः ।
पतङ्गसङ्घैरिव लङ्घितुं हि यः
परैरहो शाशकितो न कैरपि ॥ १५ ॥

तवाननेन्दूदितगोततिः सतां
करोति तं कञ्चन शीतिमोदयम् ।
सुरासुरा वारिततापसम्भवाः
कषायदावा अपि यं हरन्ति न ॥ १६ ॥

गोसङ्गभाजा भवता महावृषो
वृषाधिपाजानि सकोऽपि भारते ।
एकोऽपि यो लङ्घयितुं बहूनलं
संसारकान्तारमनन्तमाङ्गिनः ॥ १७ ॥

विभो नवाऽहो तव वीरतेह
गणाधिपानां हृदये निलीनम् ।
जघन्थ सन्देहमहारिजातं
सुवाणिबाणैरपि रूपहीनम् ॥ १८ ॥

तवागमालोचनचारिचेतसः
करोति मे वीर भयं भवोदधिः।
तनोति मोहः कुमतिं तथापि, तां
यया भजे वाणितरीं न तेऽनिशम् ॥ १९ ॥
इमं रिपुं नाशय नाथ तेन मे
विबाधकं ही बहुधा कदाशयैः।
पराभवो यः किल सेवके रिपो-
रयं धुनीते विभुतागुणं विभोः ॥ २० ॥
जडा विषीदन्ति सुरान्तराञ्चनैः
समीहया भूपतिसम्पदामपि।
नुतेरनन्तो महिमा स कोऽपि ते-
ऽवहीलना तासु ययापि ते फले ॥२१ ॥
तवागमागाधसुधासरोवरे
निलीयतां मेऽज तथा मनोझषः।
यथा भवापायदवानलोदितं
न विन्दते तापभरं मनागपि ॥ २२ ॥

भवन्तु नूनं सुकृतानि तानि मे
सदा मनो हे भुवनैकबान्धव ।
इदं निलीनं तव पादपङ्कजे
दृढानुबन्धं चलतां जहाति यैः ॥ २३ ॥
समीहमानः शिवमेव कोविदो
यतेत संसारसुखार्णवे न तु ।
परैरनेनैव च वञ्चिता जना,
मतो भवानेव गतिः स देहिनः ॥ २४ ॥
न दातुमीशा मरुतां महीरुहा
न यां घटा नो मणयो न धेनवः ।
अनन्तसातोदयिनीं ददाति ता-
मपीश पुंसां कमलां तवानतिः ॥ २५ ॥
अपारसंसारविकारभेदिने
सदा परानन्दचिदेकयोगिने ।
समीहिताशेषसुखौघदायिने
नमो नमो वीरजिनाय तायिने ॥ २६ ॥

मङ्गलानि विलसन्ति समन्ता-
दानमन्ति रिपवो जिन पुंसाम्।
सम्पदः सममिहापि सुखौघैः
सम्भवन्ति भवतो नवतो वै ॥ २७ ॥

एवं वीर जिनामुनाऽपि मयका मुग्धस्तवेन स्तुतो
दृब्धेनेश सुकेवलाक्षरपदैर्भक्त्या कृपावारिधे।
आरोग्योत्तमबोधिबीजविभवं दत्वा प्रसद्याशु मे
देयान्निर्मलकेवलाक्षरपदं प्रोद्यज्जयश्रीभरम् ॥ २८ ॥

एवं वीरजिनं जगत्त्रयपतिं श्रेयोविलासालयं
शक्रालीमुनिसुन्दरस्तवगणैर्नूतक्रमं यः स्तुते।
सर्वाभीष्टसुखोच्चयैरविरतं स्फूर्जत्प्रमोदाऽढ्यो
मोहद्वेषिजयश्रिया स लभते श्रेयोऽचिराच्छाश्वतम् ॥२९॥

इति युगप्रधानावतारबृहत्तपागच्छाधिराजश्रीदेवसुन्दरसूरि-
श्रीज्ञानसागरसूरिश्रीसोमसुन्दरसूरिशिष्यैः श्रीमुनि-
सुन्दरसूरिभिर्विरचिते जयश्र्यङ्के श्रीजिनस्तोत्र-
रत्नकोशे प्रथमप्रस्तावे श्रीवर्द्धमानजिनस्तवनं
केवलाक्षरपदं स्तोत्ररत्नं पञ्चदशम्।

॥ अर्हम् ॥

जयश्रीनिलयं यस्य पदाम्भोजं भजन् भवी ।
भवतेऽभीप्सितं श्रेयः श्रीवीरं तं स्तुवे विभुम् ॥ १ ॥

न शब्दव्युत्पत्तौ मम चतुरता नापि कविता-
गुणो नार्थोत्पत्तिः स्फुरति पटुता नो भणितिषु ।
प्रयत्नः स्तोतुं त्वां तदपि यदयं, हेतुरिह मे
विभोऽनन्योपाये शिवसुखफले गाढरुचिता ॥ २ ॥

न ये पात्रं मैत्र्या न वशकरणा नोद्यचरणा
न शीलाढ्या नो वा दमितमनसो नोग्रतपसः ।
दधानैरेतेष्वप्यतुलकरुणामेष जगदे
शिवस्योपायोऽर्हन् मुनिभिरिति ते संस्तुतिरियम् ॥३॥

नयैरेकैकांशग्रहणनिपुणैर्नाथ न गुणा-
स्तवानन्ताः शक्याः स्तवयितुमनन्तैरपि युगैः ।
प्रमावाक्यं तत्तान् जिन सममनन्तानभिदधत्
स्तुवन्ति स्तोतारस्तव मतविदो वादिन इव ॥४॥

पुनर्जन्माभावोऽखिलजनहितैकार्थकरणं

न वैक्लव्यं कार्ये क्वचिदपि नचौत्सुक्यमपि यत् ।
कदाऽप्यस्वास्थ्यं नेत्यनुपमतयैवाभवपरान्
स्वरूपं ते देवानधरयति मुग्धाशयमुषः ॥ ५ ॥
महानन्दप्राप्तौ न भवति रतिः संसृतिसुखे,
गतेऽत्यन्ताभावं वपुषि खलु जन्मास्ति न पुनः ।
समग्रैश्वर्याप्तौ प्रभवति न मित्रेतरमति-
र्बुधंमन्यैरन्ये कथमनुसृतास्तच्छिवधिया ॥ ६ ॥
विमुक्तो रागाद्यैः प्रथयति फलं नो तदुचितं
विनाऽमी नादृष्टं न च तदुदये निर्वृतिसुखम् ।
स्वयं नाप्राप्तस्तत्प्रभवति परेभ्यो वितरितुं
त्वदन्यं सेवन्ते कथमिव परे तेन कुधियः ॥ ७ ॥
अमेयास्ते[1] बाणा भुवनजयिनः शम्बररिपोः
कषायास्ते योधा हतनरसुराधीश्वरमदाः ।
अयं मोहस्तेषां प्रभुरपि भटत्वे स्तुतिपदं
विभो तावद्यावन्न तव चरितं संस्पृशति हृत् ॥ ८ ॥

---

१ अमोघा इति पाठान्तरम् ।

उपादित्सोपेक्षा प्रभवति जिहासाऽपि च यतः
प्रमाणं तत् ज्ञानं व्यपगताविवादं मम परैः ।
उपागामि ज्ञानं स्वमपि न तथा कैश्चन नु य-
त्कृतोपेक्षं त्वय्यप्यफलमिति नासाधु तदपि ॥ ९ ॥

वदन्तो याथात्म्यात्प्रमितिविषयं वस्तु सकलं
त्वयाऽर्हन् ये भङ्गा निखिलविदुषा सप्त गदिताः ।
न वादीन्द्राः केचिद्बहुविधकुतर्कोद्धुरगिरोऽ
प्यतिक्रान्त्यै तेषां दधति जलधीनामिव बलम् ॥ १० ॥

नया मिथो मत्सररीणगोचरा
यशो लभन्ते गगनाम्बुजस्य ये ।
त एव तत्त्वार्थमया वचस्तव
प्रपद्य मैत्रीं दधतेऽङ्गिसङ्घवत् ॥ ११ ॥

निवर्त्तते नैव कुदेवकुग्रहो
विना त्वदुक्तावगमाद्यथायथम् ।
न तन्निवृत्तिं च विना स तत्परे
कथं निरस्यं त्वितरेतराश्रयम् ॥ १२ ॥

न दृष्टिरागी भजते त्वदागमं
　　न वेत्ति तत्त्वं भवतश्च तं विना ।
न दृष्टिरागं च जहाति तज्जडो
　　हताः कुतीर्थ्या न्विति चक्रकेण ही ॥१३॥
एकैकधर्मावधिबुद्धयः परे
　　कथं लभन्तेऽर्थमनन्तधर्मकम् ।
एकैककूपोदरदर्शिनः, पतिं
　　सरस्वतीनामिव दर्दुरार्भकाः ॥ १४ ॥
अतो भवानेव समस्तदृग् जगौ
　　स्वरूपमस्यावितथं तथा विदन् ।
परो मरालाल्लभते हि वैधसा-
　　न्न वै जगत्सर्वजलाश्रयात्मकम् ॥१५॥
स्वरूपबोधेऽप्यविदग्धबुद्धय-
　　स्त्वदीरिते वस्तुनि तीर्थिका मुधा ।
गृणन्ति दोषान् खलु काचकामलो-
　　पलिप्तनेत्रा इव शुद्धनाटके ॥ १६ ॥

जिन स्वरूपं तव यन्निरावृति,
स्फुटीभवेत्तादृश एव संविदः।
उदीर्णमोहप्रतिरोधकेक्षणाः
समीक्षितुं तत् प्रभवः कथं परे ॥ १७ ॥
गिरा प्रपद्यापि भवन्तमीश्वरं
भवन्ति केचित्कुधियो भवास्पदाः।
जगज्जिगीषाऽऽतुरविक्रमः परं
न तीर्थिकैस्तुष्यति मोहवैर्ययम् ॥ १८ ॥
त्वां प्रत्यजं विप्रतिपन्नचेतसः
कथं न शोच्या भगवन् कुतीर्थिकाः।
मतास्तथैवाप्रतिपन्नका अपि
ध्रुवं प्रपद्यापि विराधकाश्च यत् ॥ १९॥
त्वयि प्रपन्नेऽपि विभौ किमङ्ग मे
सृजन्ति रागादिरिपुव्रजा व्यथाम्।
अहो विशुद्धिर्मनसः सकर्मणां
सुदुर्लभाऽमी प्रभवन्ति यां विना ॥ २० ॥

कुज्ञानदर्शनकपाटयुगेऽभविष्यद्
दुर्लक्षता तव विभो यदि नार्गलेयम् ।
मोहोच्चदुर्गमतिगत्य सुदर्शनाति-
द्वारेण के शिवपुरं न तदाऽध्ययास्यन् ॥२१॥

निर्दोषे ते भुवनविदितेऽप्यद्वितीये चरित्रे
मुह्यन्नर्हन्नपि शिवगमी तीर्थिकैः सङ्गतोऽङ्गी ।
छन्नः काचैरिव वरमणिर्या विनेष्टार्थभाग्नो
सामग्रीं तामभवफलदां देहि यत्स्यां कृतार्थः॥२२॥

दानं चारु न मे न शीलमतुलं नोग्रं तपो नो स्थिरो
भावो नातिदया क्रियासु न रुचिर्नान्योऽपि कश्चिद्गुणः ।
भावि ब्रह्म तथाऽप्यतः स्तवनतः सम्बन्धमात्रेण ते
तुच्छादप्यभवैवमस्मि मुदितश्चिन्ता तवैवाग्रतः ॥२३॥

देवसुन्दर मुदैवमनन्त-
ज्ञानसागर मयाऽपि नुतोऽर्हन् ।
सोमसुन्दरतरां कुरु बोधिं
स्याद्यतो मम भवारिजयश्रीः ॥ २४ ॥

एवं वीरजिनं जगत्त्रयपतिं श्रेयोविलासालयं
शक्रालीमुनिसुन्दरस्तवगणैर्नूतक्रमं यः स्तुते ।
सर्वाभीष्टसुखोच्चयैरविरतं स्फूर्जत्प्रमोदाऽद्वयो
मोहद्वेषिजयश्रिया स लभते श्रेयोऽचिराच्छाश्वतम्॥२५॥

इति युगप्रधानावतारबृहत्तपागच्छाधिराजश्रीदेवसुन्दरसूरि-
श्रीज्ञानसागरसूरिश्रीसोमसुन्दरसूरिशिष्यैः श्रीमुनि-
सुन्दरसूरिभिर्विरचिते जयश्र्यङ्के श्रीजिनस्तोत्र-
रत्नकोशे प्रथमप्रस्तावे श्रीवर्द्धमान-
जिनस्तोत्ररत्न षोडशम् ।

॥ अर्हम् ॥

जयश्रीदायकं विश्वनायकं मोहजित्वरम् ।
अनन्तमहिमाम्भोधिं श्रीजिनं श्रेयसे स्तुवे ॥ १ ॥

जिन स्तवं यं तव वासवादयः
सृजान्ति भक्तेर्विदधेऽहमप्यमुम् ।
महाम्बुदा यत्किल भुञ्जते पयः
किमम्बुधेस्तच्छफराभेकोऽपि न ॥ २ ॥

फलं यदा पञ्चमकल्पसम्पदं
परे लभन्ते परमैर्यमादिभिः ।
स्तुतेर्लवस्यापि तवानुषङ्गिकं
तदाऽऽमनन्तः सुधियोऽत्र केऽलसाः ॥ ३ ॥
तथा न शस्यं हरिपूज्यतादि ते
यथा मुने मुक्तिपथप्रकाशनम् ।
न दानलुभ्यद् भ्रमरादि दिग्गजे
तथा महत्त्वाय यथा क्षमोद्धृतिः ॥ ४ ॥
विधन्ति दृष्टेष्विह बालिशाः स्पृहां
ददासि तत्त्वं तु किमप्युपासितः ।
यदीक्षितं क्वापि न चेक्ष्यतेऽपि तै-
र्भजन्ति न त्वामिति युक्तमीश ते ॥ ५ ॥
स्वजातिवात्सल्यवशादिवाङ्गिनः
सकर्म्मकैरेव मिलन्ति दैवतैः ।
अलक्ष्यरूपं त्रिजगद्विलक्षण-
स्थितिं भवन्तं ननु के श्रयन्तु तत् ॥ ६ ॥

स्वतन्त्रमुज्जासयता रिपूकृता-
स्त्वया स्मराद्याश्चिरसेवका अपि ।
उपारतं त्वामिति विभ्रयन्ति ते
जनं त्वदन्यांस्तु बहुं प्रयुञ्जते ॥ ७ ॥

त्वया निरास्यन्त चिरत्नसेवकाः
स्मरादयो हंसि च तत्पदान्यपि ।
भजन्ति तत्त्वां बहवो भियेव ना-
ङ्गिनोऽन्यथाचारवतः परान् श्रिताः ॥ ८ ॥

परेषु मोहः प्रमदादिभिः स्फुट-
स्तदन्विते ज्ञानमशेषगं न च ।
न तद्विना वस्तु यथायथं वद-
त्यतः परोक्तैः किमु वञ्च्यते जगत् ॥ ९ ॥

विधूय तेऽध्वानमशेषवेदिन-
स्तपस्क्रियाऽनुष्ठितयः परेषु याः ।
स्फुरन्ति मोहस्य विडम्बनाऽम्बुधे-
र्ध्रुवं विभो ता अपि काश्चिदूर्मयः ॥ १० ॥

लवो महिम्नां जिन कोऽपि वर्ण्यते
परेषु मोहग्लपितेषु यो जडैः।
निबन्धनं क्लेशततेरमीष्वयं
सतां कृपायै श्वयथुर्यथा शोफजः॥ ११॥

॥ अथवा ॥

स्तुवन्ति यद्दैत्यजयादिभिर्गुणै-
र्जडाः प्रभुत्वं भगवन् परेष्वपि।
कषायदास्याज्जगतां स धर्म्मणा
ऽभ्युदेति हास्यं चरितेन तेन नः॥ १२॥
विभो कुशास्त्रैर्ग्रहिला यथा यथा
परे यतन्ते गतये शिवाध्वनि।
भवन्ति दूरेण ततस्तथा तथा
पुरात्पराञ्चोऽभिमताद् भ्रमादिव॥१३॥
त्वयीश रत्नत्रयमानुभूतिकं
शिवश्रियामौपयिकं वदत्यपि।
जडैः सतृष्णैर्मृगतृष्णिकास्वपि
प्रपाययन्तोऽम्बु किमाश्रिताः परे॥ १४॥

त्वया पिशाचो जिन मोहनामक-
स्तिरस्कृतो यः शिवशर्मकाङ्क्षिणा ।
स नूनमाराधनतः श्रितः परै-
र्बलेन चास्य ग्रहिलीकृतं जगत् ॥ १५ ॥
तवेश देवान्तरतो वदन्ति ये-
ऽधिकत्वमेतानपि निन्दकान् त्रदे ।
स्तुतिः किमाधिक्यविवर्णने भवे-
न्महाम्बुराशेर्मृगतृष्णिकाऽम्बुतः ॥ १६ ॥
भयं न तेषां भवदुःखसम्भवं
विडम्बना मोहपिशाचजाऽपि च ।
शशाम नो शाम्यति वा शमिष्यति
प्रभुर्न येषां शरणं त्वमङ्गिनाम् ॥ १७ ॥
यथा भवापायनिदानमाश्रवाः
शिवश्रियो हेतुरनाश्रवास्तथा ।
त्वमेव तान् सम्यगवग्, न तत्प्रभो
परं शिवस्यौपयिकं त्वदीरितात् ॥ १८ ॥

त्वदंह्रिसंस्पृष्टरजस्यपीश यः
स्फुरेत्प्रभावः स सुरान्तरेषु न।
उपान्तदारुण्यपि चन्दनस्य यत्,
क्व सौरभं तत्फलदान्तरेषु वा ॥ १९ ॥
परे ददन्ते भवचारके जनि-
स्थितिक्षयांश्चित्रमहाव्यथेऽङ्गिनाम् ।
अचिन्त्यसौख्यं च महोदये भवा-
नतन्त्रयश्चैत्य इतो विशेष्यसे ॥ २० ॥
विवेचयन् यश्चरितैर्हरादिकान्
निजान् भवन्तं विजहच्च दूरतः ।
अलम्भयत्त्वामिति मादृशानपि
प्रभुं स मोहः किल बान्धवः परः ॥ २१ ॥
तव स्वरूपं सुगतो विचारयं-
स्तदन्यवस्तु व्यतिवृत्तिमेव यत् ।
त्वत्तां च तद्वत्सु ददर्श धीनिधि-
र्व्यावृत्त्यभेदाविति तत्त्वमास्थितः ॥ २२ ॥

विलोकते देव तवागमाञ्जना-
 न्निसर्गचिद्दर्शनलोचनोपगम् ।
अनाद्यविद्यातिमिरं निरस्य यः
 स एव किञ्चित्तव रूपमीक्षते ॥ २३ ॥
समः प्रभोऽर्थः खलु देशतोऽपि ते
 विचेतनो नो न परोऽपि मोहयुक् ।
सचेतनो मोहविवर्जितश्च यः
 स तु त्वमेवेत्युपमां न गाहसे ॥ २४ ॥
कथं स मेयो महिमा तव प्रभो
 विहारकल्याणकपञ्चकादिभिः ।
यतस्त्वदासाद्भुवनोपकारितां
 द्रव्यादयोऽर्था दधते परेऽप्यहो ॥ २५ ॥
तनोषि तत्सप्तसु नाथ रज्जुषु
 स्थितोऽपि चेज्जन्मनि नारकाङ्गिनाम् ।
हृदि स्थितस्तत्कृतिनां सुखाद्वयं
 यदव्ययं त्वं ददसे किमद्भुतम् ॥ २६ ॥

अवाप्य रागादिकसेवकान् परै-
र्वशीकृतं नाथ यथा त्रयं जगत्।
निरस्य चैतान्न तथा त्वया न तत्
स्वसेवकं मामवमन्तुमर्हसि ॥ २७ ॥
ददासि चेत्त्वं स्वसमाधिवारिधे-
र्ममैककं बिन्दुमपीश तोषतः।
ततः स्मराद्या मम केऽरयः कुतो-
ऽथवा भयं किं सुलभं न शर्म वा ॥ २८ ॥
तदर्थये त्वां प्रभुमुद्विजो भवा-
दवाप्य रागाद्यरिभिः कदर्थितः।
समाधियोगं मम देहि तं द्रुतं
यतो विमुच्ये जिन भावशात्रवात्॥ २९ ॥
जिनवर भवतैव दर्शितोऽयं
निज इह कोऽपि स धर्मकल्पवृक्षः।
निरवधि लभते शुभानि यस्मात्
त्रिजगदपीष्टफलान्यनाद्यनन्तात्॥ ३०॥

बहुविधमभिवीक्ष्य सर्वदेवां-
स्तदुदिततत्त्वगुणांश्च तर्कनेत्रैः ।
शरणमगमकं तवैव पादा-
ववितथतत्त्वनिधिं च पाहि तन्माम् ॥ ३१ ॥

श्रीसोमसुन्दरगुरुक्रमसेविनाऽर्हन्
दृब्धान्मयेति मुनिसुन्दरसूरिणाऽस्मात् ।
स्तोत्रान्ममान्यसुधियामपि देहि किंचि-
त्तयेन विस्फुरति मोहभिदेर्जयश्रीः ॥३२॥

इति युगप्रधानावतारवृहत्तपागच्छाधिराजश्रीदेवसुन्दरसूरि-
श्रीज्ञानसागरसूरिश्रीसोमसुन्दरसूरिशिष्यैः श्रीमुनि-
सुन्दरसूरिभिर्विरचिते जयश्र्यङ्के श्रीजिनस्तोत्र-
रत्नकोशे प्रथमप्रस्तावे श्रीजिनपातिमहार्थ-
द्वात्रिंशकास्तोत्ररत्नं सप्तदशम् ।



॥ अर्हम् ॥

जयश्रिये शाश्वतशर्महेतवे
  कल्याणकैः स्तौमि जिनांस्तिथिक्रमात् ।
श्रीशंभवः केवलमाप कार्त्तिके
  सितेतरे बाणमिते तिथौ५जिनः ॥ १ ॥
नेमेश्च्युतिर्भानुमिते१२जनुः पुनः
  पद्मप्रभे विश्वमिते१३च तद्व्रतम् ।
वीरे शिवं दर्शतिथा१५वथार्जुना-
  ऽभवत्तृतीया सुविधेर्मतिप्रदा ॥ २ ॥
द्वादश्यरे केवलदाऽथ मार्गे
  कृष्णे शरे५ऽभूत्सुविधेः सुजन्म ।
तपोऽस्य षष्ठ्यां दिशि१०वीरदीक्षा
  रुद्रे११ च पद्मप्रभनिर्वृतिश्रीः ॥ ३ ॥
शुक्ले दशम्या१०मरजन्मसिद्धी
  हरे११नमिज्ञानमरव्रतं च ।
जन्मव्रतज्ञानलभा च मल्ले-

श्चतुर्दशी सम्भवजैन्मनेऽभूत् ॥ ४ ॥
तस्यैव राका१५तपसेऽथ पौषे
श्यामे च वामेयजनिर्दशम्याम् ।
एकादशी पार्श्वतपःप्रदाऽर्के१२
जन्मेन्दुलक्ष्माप तपोऽस्य विश्वे१३ ॥ ५ ॥
मनौ १४ मतिं प्राप च शीतलोऽथ
शुभ्रेऽभजत् तां विमलो रसे ६ ऽर्हन् ।
शान्तिर्नवम्यामजितश्च शम्भौ ११
रत्ने१४ ऽभिनन्दश्च तिथौ१५ च धर्मः ॥ ६ ॥
माघेऽथ पद्माभजिनोऽसिते रसे ६
च्युतो रवौ १२ जन्मतपश्च शीतले ।
विश्वे१३शिवं श्रीवृषभोऽभजन्मतिं
श्रेयानमायां च १५ सितेऽथ पक्षके ॥ ७ ॥
युग्मे२ऽभिनन्दनजनुर्वसुपूज्यसूनो-
र्ज्ञानं च धर्म्मविमलोद्भवकृत्तृतीया ।
अब्धौ व्रतं च विमलेऽजितजन्म सर्पे ८

नन्दे९ऽजितव्रतमिने१२त्वभिनन्ददीक्षा ॥८॥
यक्षे१३धर्म्मो दीक्षितः फाल्गुनेऽथ
श्यामे षष्ठ्यां ज्ञानमापत्सुपार्श्वः।
सिद्धिं चाश्वे७ऽसौ मतिं चेन्दुलक्ष्मा
नन्दे९चासीत्पुष्पदन्तावतारः ॥ ९ ॥
आदीश ईशे११मतिमाप सूर्ये १२
श्रेयान् जनिं केवलितां मुनिश्च।
यक्षे१३तपःश्रेयसि वासुपूज्ये
जनुर्मनौ१४तस्य तपः कुहौ१५ च ॥१०॥
सितेऽक्षि२वेदा४हिषु८चावतारा
जिनारमल्लिप्रभुशम्भवानाम्।
प्रभापतौ१२सुव्रतसद्व्रताप्ति-
र्मुक्तिश्च मल्लेरसितेऽथ चैत्रे ॥११॥
पार्श्वच्युतिज्ञानलभा चतुर्थ्यां
बाणे५ऽवतारः शशिलाञ्छनस्य।
वसौ८युगादीशजनुश्चरित्रे

शुभ्रेऽथ कुन्थोरनले३ऽवबोधः ॥ १२ ॥
इषा५वनन्ताजितशम्भवेषु
सिद्धिर्निधौ९सा सुमतेश्च रुद्रे११ ।
बोधोऽस्य विश्वे१३जननं च वीरे
पद्मप्रभौ ज्ञानकरी च राका ॥ १३ ॥
राधेऽथ कृष्णे प्रतिपद्विमुक्त्यै
कुन्थोर्द्वितीयाऽजनि शीतलस्य ।
सिद्ध्यै शरे५प्रव्रजनं च कुन्थोः
श्रीशीतलस्यावतरश्च तर्के६ ॥ १४ ॥
नमेः शिवं दिक्षु१०दभूदनन्तो
यक्षे१३मनौ१४चास्य चरित्रबोधौ ।
जनिश्च कुन्थोर्विशदेऽभिनन्दो
वेदे४च्युतोऽश्वे७ऽवततार धर्म्मः ॥ १५॥
फणभृत्य८भिनन्दनिर्वृतिः
सुमतेर्जन्म च तत्तपोनिधौ९ ।
दिशि१०वीरमती रवौ१२च्युति-

विमले विश्वतिथि१३च्युतोऽजितः ॥ १६ ॥
ज्येष्ठे तु कृष्णे च्युतये रसो६ऽभूत्
श्रेयांसनेतुर्मुनिजन्म नागे ८ ।
निधौ९स सिद्धो जनिनिर्वृती श्री-
शान्तेस्तु यक्षे१३भुवने१४तपोऽस्य॥ १७॥
सिते शरे५धर्म्मशिवं नवम्यां
श्रीवासुपूज्यावतरः सुपार्श्वः ।
जातो रवौ१२विश्वदिने१३तपोऽस्या-
षाढे शितौ श्रीवृषभश्च्युतोऽब्धौ ४ ॥ १८॥
हये७ऽपवर्गो विमले निधौ ९ श्री-
नमेस्तपस्या धवले तु षष्ठ्याम् ।
वीरश्च्युतो दन्तिनि८नेमिमोक्षो
रत्ने१४विमुक्तो वसुपूज्यजन्मा ॥ १९ ॥
श्रावणे श्यामलेऽग्नौ३शिवं श्रेयसो
ऽनन्तनाथाऽवतारेऽभवत् सप्तमी७।
अष्टमी श्रीनमेर्जन्मने सेवधौ ९

विच्युतः कुन्थुनाथोऽथ पक्षेऽर्जुने ॥२०॥
नयने२सुमतिच्युतिः शरे५
नेमेर्जन्म रसे६ऽस्य तु व्रतम्।
भुजगे ८ वामेयनिर्वृती
राकायां समवातरन्मुनिः ॥ २१ ॥
श्यामे नभस्ये तुरगे७ऽपवर्ग-
श्चन्द्राभनेतुश्च्यवनं च शान्तेः।
वसौ८सुपार्श्वावतरोऽथ शुद्धे
निधौ९शिवं श्रीसुविधेश्च जज्ञे॥ २२ ॥
दर्शे१५त्वाश्वयुजे शिवासुतमती राका १५दिने श्रीनमे-
र्जज्ञे चाऽवतरो मयेति विनुताः कल्याणकैः श्रीजिनाः।
कल्याणौघकराः प्रबोधमतुलं तत्त्वं त्वनन्तं स्फुर-
न्नित्यानन्दमयी यतो मम भवेदुद्यज्जयश्रीः परा ॥ २३ ॥
एवं सर्वजिनेश्वरांस्त्रिजगतीश्रेयोविलासप्रदान्
शक्रालीमुनिसुन्दरस्तवगणैर्नूतक्रमान् यः स्तुते।
सर्वाभीष्टसुखोच्चयैरविरतं स्फूर्जत्प्रमोदाद्वयो

मोहद्वेषि जयश्रिया स लभते श्रेयोऽचिराच्छाश्वतम्॥२४॥

इति युगप्रधानावतारबृहत्तपागच्छाधिराजश्रीदेवसुन्दरसूरि-
श्रीज्ञानसागरसूरिश्रीसोमसुन्दरसूरिशिष्यैः श्रीमुनि-
सुन्दरसूरिभिर्विरचिते जयश्र्यङ्के श्रीजिनस्तोत्र-
रत्नकोशे प्रथमप्रस्तावे चतुर्विंशतिश्रीजिन-
कल्याणकस्तोत्ररत्नमष्टादशम् ।

॥ अर्हम् ॥

जयश्रिया मोहरिपोरवाप्त-
त्रिलोकसाम्राज्यरमाभिरामम् ।
विदेहभूमण्डलमण्डनं श्री-
सीमन्धरं स्वामिनमानुवामि ॥ १ ॥

सृजन्ति यं दिव्यदृशः सुयोगिन-
स्तव स्तवं तं विदधे जडोऽप्यहम् ।
पिबेद् गजो वारिसरस्यजोऽपि वा
स्वतुन्दिपूरं समता फले पुनः ॥ २ ॥

भवन्ति ये सिद्धरसास्तव स्तवै-
    रिवौषधैर्भावितधातवः प्रभो ।
तेषां सदा शीलितयोगसम्पदां
    स्फुरन्ति कल्याणसमृद्धयः पराः ॥ ३ ॥
प्लवङ्गवच्चित्तमिदं समन्ता-
    त्पारिप्लवं मे विषयेषु लुभ्यत् ।
गुणैर्निबद्धं स्तवयोजितैस्ते
    स्थिरीभवत्साम्यजशर्म्मणेऽस्तु ॥ ४ ॥
सर्वज्ञ देशान्तरितोऽपि पूजा-
    स्तवादिभक्तीर्मम सम्प्रतीच्छ ।
भवन्ति नाभ्रान्तरितेऽपि भानौ
    नृणां किमर्घाञ्जलयः कृतार्थाः ॥ ५ ॥
विजयं जिन पुष्कलावतीं
    विनुमः पूर्वविदेहभूषणम् ।
नगरीमपि पुण्डरीकिणीं
    त्वमभूर्यत्र जगत्तपःफलम् ॥ ६ ॥

श्रीकुन्थुनाथारजिनान्तरे त्वं
    जातः शिवादन्वथ सुव्रतस्य ।
अलाव्रतं रामपितुश्च राज्ये
    शिवंगमी भाव्युदयार्हतोऽनु ॥ ७ ॥
तपांसि तान्येव तपांसि मन्ये
    तानेव योगानपि तात योगान् ।
येषां महिम्ना नयनातिथिस्त्वं
    सतां शिवश्रीप्रतिभूः प्रयासि ॥ ८ ॥
श्लाघ्या ग्रहा भ्रान्तिजुषोऽपि तेऽमी
    ये तात पश्यन्ति दिनान्तरे त्वाम् ।
गतभ्रमोऽपि त्वयि विश्वबन्धा-
    वहं त्वधन्यस्तव दूरवर्त्ती ॥ ९ ॥
स्तवीमि सीमन्धर पक्षिणोऽपि
    पश्यन्ति ये पक्षबलादिनं त्वाम् ।
अहं तु पापस्तव दर्शनार्थ-
    मनोरथैरेव सदा कदर्थ्ये ॥ १० ॥

मनोरथा अप्यथवा भवन्तु
सदा भवद्दर्शनगोचरा मे ।
ध्यातोऽपि यत्पूजितवद्ददासि
त्वमीप्सितं सर्वमिति प्रमोदे ॥ ११ ॥
स्तवीमि कर्म्माणि मुनीन्द्र तानि
बभूव येभ्यो मनसः प्रसूतिः ।
ध्यानेन साक्षादिव येन कृत्वा
त्वां दैवतं स्यां भगवन् कृतार्थः ॥१२॥
दूरेऽपि भक्त्या विमलेऽसि चित्ते
सङ्क्रान्तिभाग् मे हर तत्तमोऽन्तः ।
किं दर्प्पणान्तः प्रतिबिम्बितोऽपि
रविः प्रकाशं न तनोति गेहे ॥ १३ ॥
त्वं सर्वसर्वेष्टहितोपकारी
दूरेऽपि मां बोधय विश्वबन्धो ।
करोति किं नो गगने स्थितोऽपि
सुधामयूषः कुमुदे प्रबोधम् ॥ १४ ॥

दुर्गाद्रिनद्यन्तरितोऽपि नेत-
रुल्लासयस्येव गुणैस्त्रिलोकीम् ।
किं काचकुम्भान्तरितोऽपि दीपः
प्रकाशयत्येव करैर्न वेश्म ॥ १५ ॥
अनाद्यविद्योदरपाशबद्धं
मां मोचय त्रातरिहापि सन्तम् ।
पयोजगर्भप्रतिपन्नरोधं
भृङ्गं यथा दूरतरोऽपि भानुः ॥ १६ ॥
जगन्ति पश्यन्नपि किं कषायै-
र्मां पीडितं पश्यसि न स्वभक्तम् ।
दृष्टस्त्वया यन्न हि पीड्यते तै-
रूरीकृतो वज्रिजितेव सर्प्पैः ॥ १७ ॥
यथेच्छदानैरनृणीकृते त्वया
जगत्यशेषेऽपि ऋणार्दितोऽस्मि किम् ।
कर्म्मोत्तमर्णैर्भवगुप्तितो न य-
न्मुच्ये जिनाद्यापि ऋणान्नवास्थितेः ॥१८॥

सुयोगविद्याविधिसम्प्रयोगत-
स्तन्मामपि प्रापय तत्त्वशेवधीन् ।
येनानृणीभूय निरस्य रोधका-
ननन्तधामा विलसामि मुक्तिभाक् ॥ १९ ॥

त्वां यत्र चित्ते विनिवेश्य मोदे
रागादयो देव दहन्त्यदोऽपि ।
ततो जगद्रक्षणदाक्षिणोऽपि
कथं विभो रक्षसि नाश्रयं स्वम् ॥ २० ॥

॥ अथवा ॥

रागादयो यद्विजितास्त्वयैते
वैरेण तेनैव जिनेन्द्र मन्ये ।
करोषि चित्ते मम यत्र वासं
दहन्त्यमी तत्तदुपेक्षसे किम् ॥ २१ ॥

विधूय रागादिभवान् विकारान्
दधासि रूपं निरुपाधिकं यत् ।
त्रिलोकपूज्ये भवतः प्रसादा-
न्ममापि तत्रानुभवोऽस्तु सम्यक् ॥ २२ ॥

अशेषतः सर्वविदोऽपि भक्तान्
सीमन्धर प्रापयतः शिवं ते ।
किं विस्मृतोऽहं यदि दूरगत्वा-
त्तत्ते न युक्तं ह्यसि दूरदर्शी ॥ २३ ॥
वृषाङ्कितोऽसीति वृषाङ्कितं मां
कुरुष्व सम्यक् कृपया प्रसद्य ।
भवामि युक्तं तव सेवको य-
द्देयाः स्वसाम्यं च ममाग्रतोऽपि ॥२४॥
श्रीसीमन्धरतीर्थनाथ मयका स्तुत्वैवमभ्यर्थ्यसे
नाम्नाऽहं मुनिसुन्दरोऽभवमथो कुर्याः प्रसादं तथा ।
स्यां सर्वज्ञयथार्थतोऽपि विशदज्ञानादिरत्नत्रया-
ल्लब्ध्वा कर्म्मजयश्रियं शिवपुरे राज्यं लभे चाचिरात् ॥२५॥

इति युगप्रधानावतारबृहत्तपागच्छाधिराजश्रीदेवसुन्दरसूरि-
श्रीज्ञानसागरसूरिश्रीसोमसुन्दरसूरिशिष्यैः श्रीमुनि-
सुन्दरसूरिभिर्विरचिते जयश्र्यङ्के श्रीजिनस्तोत्र-
रत्नकोशे प्रथमप्रस्तावे श्रीसीमन्धरस्वामि-
स्तोत्ररत्नं एकोनविंशतिमम् ।

---

॥ अर्हम् ॥

आनन्दं यः परं प्राप रागाद्यरिजयश्रिया ।
तं श्रीजिनपतिं स्तौमि सिद्धानन्तचतुष्टयम् ॥ १ ॥

प्रभो त्वया मुक्तिसुखं न दूरे
यदेव वाञ्छन्ति भवोद्विजोज्ज्ञाः ।
अपाद्युपायोऽस्य तु संयमो यो
विशुद्धिरेतस्य दुरासदा मे ॥ २ ॥

हातुं यदीशो न रसेषु लौल्यं
न गन्धगर्द्धं न हि शब्दरागम् ।
वाञ्छं न च स्पर्शसुखे न रूपे-
ऽप्युद्यत्कषायः सति ते श्रुतेऽपि ॥ ३ ॥

महाव्रतानां न हि मे विशुद्धि-
र्नास्मि प्रगल्भः समिधीश्च धर्तुम् ।
गुप्तीस्तथा पालयितुं प्रमादै-
र्ध्यातुं च सद्ध्यानमसद्विकल्पैः ॥ ४ ॥

॥ युग्मम् ॥

भीतस्ततोऽर्हन् भवदुःखराशे-
रितश्च मुक्तेर्विमृशन्नुपायान् ।
स्तवेष्वसारेष्वपि ते यतेऽस्या-
माम्नायमाम्नाय कुतश्चिदेतम् ॥ ५ ॥
मां कद्वदं निर्गुणमप्यमुं त-
द्रक्ष प्रभो त्वं दययैव दीनम् ।
शक्यं न चेन्निर्गुणपालनं तत्
गुणान् ददस्वेत्यपि ते हि वश्यम् ॥ ६ ॥
ज्ञानं न मेऽस्ति प्रचुरस्तु गर्वः
क्रोधोऽस्ति भूयान् न तपश्च तीव्रम् ।
न सत्क्रियाऽऽस्ते बहुला तु माया
वस्त्रादिलोभोऽस्ति न संयमस्तु ॥ ७ ॥
सन्तीश शिष्या न च शुद्धशिष्या
आडम्बराः सन्ति न सुक्रियास्तु ।
वाग्डिण्डिमोऽस्ति प्रशमस्तु नान्तः
सत्पुस्तकाः सन्ति नचार्थबोधः ॥ ८ ॥

एवं समग्रा अपि सन्ति दोषा
गुणाः पुनर्नो मयि लेशतोऽपि ।
बिभेमि दोषप्रभवात् फलात्तु
लुभ्यामि तस्मिन् गुणसंभवे तु ॥ ९ ॥
उपायहीनं तदुपेयसक्तं
मां किंचिदीशौपयिकं प्रशाधि ।
यतो जिनैषोऽपि गुणानवाप्य
लभेत तेषां फलमप्यभीष्टम् ॥ १० ॥
॥ अर्थतश्चतुर्भिः कलापकम् ॥
गर्वेण मे ज्ञानमपाक्रियेत
ध्यानं च सर्पेत्कुविकल्पजालैः ।
चारित्रलेशोऽपि न सत्कषायैः
क्रियाकलापश्च सदा प्रमादैः ॥ ११ ॥
इत्यान्तरैर्मे ह्रियते द्विषद्भिः
प्रसह्य सर्वस्वमिदं मदोग्रैः ।
एषां विजेताऽस्ति न च त्वदन्य-

स्तत्ते पुरो नायक पूत्करोमि ॥ १२ ॥
विश्वत्रयैश्वर्यरमालयोऽस्ति
कृपालुरेकश्च कृपाऽऽस्पदेषु ।
इति प्रसिद्धिर्जयिनी तवैव
सम्यक् ततो मां जिन तां च रक्ष ॥१३॥
अजस्रदुर्ध्यानकदर्थितं मे
लगत्यनुष्ठानविधौ मनो न ।
फलाय चेयं न मनो विना स्यात्
प्रयासमात्रं तदसौ हहा मे ॥ १४ ॥
किमस्म्यभव्यः किमवश्यभावी
दुःखार्णवानन्तभवभ्रमो मे ।
तद्दुर्विकल्पैर्हि मनोऽर्जतीद-
मघं यदर्हन्न हि वक्तुमीशे ॥ १५ ॥
त्वामेव नाथं शरण प्रपद्ये
सदाऽप्यधीये भवदागमं च ।
स्मरामि ते नाममयांश्च मन्त्रां-

स्तेषामधिष्ठायकदेवताश्च ॥ १६ ॥
बिभेमि पापाज्जिन दुर्गतेश्च
याचे च सर्वान् भवपातुरक्षाम्।
ईहे च सध्यानमदुर्विकल्पं
मनःशुभालम्बनयन्त्रणेन ॥ १७ ॥
भावारिवर्गस्य मिलत्तथापि
मनो दुरन्तं न निषेद्धुमीशे।
तच्छिक्षितैश्चैतदसद्विकल्पै-
र्मां दुर्गतौ पातयतीति रक्ष ॥ १८ ॥
त्वयि प्रभौ सत्यपि विश्वताते
मनो रिपुर्मां बहुदुर्विकल्पैः।
कदर्थयित्वा नरकाग्निपाक-
योग्यं क्वचित्क्षेप्स्यति तन्न जाने ॥१९॥
उच्चैर्गुणस्थानकमारुरुक्षु-
र्यावच्छुभध्यानकृते यतेऽहम्।
तावन्मनोऽरिः कुविकल्पपाशै-

निबध्य मां ही क्षिपतेऽध एव ॥ २० ॥
न खेलनं श्वार्हति पूतिकर्णो
यथा न कुष्ठी ललनादिभोगम् ।
नचातिसारी घृतपानमेवं
नार्हामि मुक्तिं कुमनोहतो ही ॥ २१ ॥
कृपां कृपालो मयि धेहि तत्पदे
प्रदेहि मे शक्तिमिमां ययाऽनिशम् ।
वशीभवेन्मानसकं भवाम्बुधौ
क्षिपेन्न यन्मां कुविकल्पजालतः ॥२२॥
त्वामनन्यगतिकः प्रभुमेकं
संश्रितोऽस्मि शरणं भवभीरुः ।
तत्तथा कुरु यथा कुविकल्पा
न क्षिपन्ति रिपवो नरके माम् ॥ २३ ॥
वाङ्मनोऽङ्गजनितं मम पापं
द्रव्यतोऽपि भवतः स्तवनाद्यैः ।
नाशमाशु लभतां शिवता ते

तेऽप्यलं यदिह नाथ तवैव ॥ २४ ॥
संवृतेन मनसा महर्षयो
येन निर्वृतिमनन्तशोऽप्यगुः ।
मां तदेव कुविकल्पभृद्भवा-
म्भोनिधौ क्षिपति ही करोमि किम् ॥ २५ ॥
प्रभो निपीयापि तवागमामृता-
न्यवाप्य चारित्ररसायनान्यपि ।
सहे प्रमादादिगदैः कदर्थनां
श्रयामि तत्कं शरणं हतोऽस्मि ही ॥ २६ ॥
दुर्ध्यानतो मे विरमेन्न चित्तं
बिभेमि पापान्नरकप्रदाच्च ।
स्वयं रिपुः स्वस्य तदित्यनन्य-
गतिस्तवाग्रे विलपामि नाथ ॥ २७ ॥
कृपाऽऽस्पदं मां तदुपेक्षसे किं
न हंसि मेऽद्यापि दुरापदं यत् ।
कृपा न किं त्वां त्वरयत्यधीशा-

भ्यासीर्हृदो मे किमुताकृपत्वम् ॥ २८ ॥
भवद्विषः पासि सुरासुरानपि
प्रभुस्ततस्त्वां शरणं श्रयन्ति ते ।
दीनं श्रितं पासि न मां नु तत्त्वम-
प्यवेक्ष्य वक्रं तिलकं करोषि किम् ॥ २९ ॥
अकारि किं देव मया कुकर्म्म
ममेदृशी धिग् यदनर्हताऽभूत् ।
जगत्त्रयेशोऽपि न पासि यन्मां
शोचामि हा हा हतकः स्वमेव ॥ ३० ॥
यद्यप्यद्रष्टव्यमुखोऽस्मि पाप्मभिः
प्रसीद हे नाथ तथापि मय्यपि ।
स्वदर्शनं देहि विधेहि मेऽर्हतां
यतो भवेत्साऽपि तव प्रसादतः ॥ ३१ ॥
प्रार्थये शिवममुष्यकारणं
संयमस्तु विषमस्त्वयोदितः ।
न प्रमादरिपवस्त्यजन्ति मां

किं करोमि भवभीभृतस्ततः ॥ ३२ ॥

सचेतनाचेतनवस्तुजाते-
ष्ववाप्तसाम्यास्तकषायपङ्कम् ।
मनः सदा मे गतदुर्विकल्पं
भूयात्प्रभो त्वद्गुणवार्द्धिमग्नम् ॥ ३३ ॥

जगज्जनानन्दि हितोपकारा-
नवद्यहृद्यायतिकृत्प्रवृत्ति ।
भवद्गुणस्तोमकथैकवृत्ति
वचोऽस्तु मे नाथ शिवानुवृत्ति ॥ ३४ ॥

विश्वाङ्गिपीडापरिवर्ज्जनाप्त-
प्रमादमुग् संयमयोगशुद्धिः ।
तव प्रसादान्मम सिद्ध्युपाय-
स्त्वदानतिव्याप्टतिरस्तु कायः ॥ ३५ ॥

त्रातुस्ते निजदुःखसन्ततिमिति स्तोत्राज्जिनेन्द्रावदं
शक्रालीमुनिसुन्दरस्तवपदत्रैलोक्यरक्षाप्रभोः ।
कारुण्यामृतवारिधे यदि कृपापात्रे कृपां गाहसे

तद्दुःखप्रतिकारमाशु कुरु मां सर्वैः सुखैर्योजयन् ॥३५॥

इति श्रीयुगप्रधानवतारबृहत्तपागच्छाधिराजश्रीदेवसुन्दर-
सूरिश्रीज्ञानसागरसूरिश्रीसोमसुन्दरसूरिशिष्यैः श्री-
मुनिसुन्दरसूरिभिर्विरचिते जयश्र्यङ्के श्रीजिन-
स्तोत्ररत्नकोशे प्रथमप्रस्तावे स्वसांसारिक-
दुःखप्रकटनदुःखप्रतिकारविज्ञप्तिरूपं
स्तोत्ररत्न विंशम् ।

---

॥ अर्हम् ॥

जयश्रियां सेवधिमेधमान-
समग्रलब्धिह्रदिनीनदीशम् ।
सुरासुरेन्द्रालिविधीयमान-
क्रमाम्बुजोपासनभासमानम् ॥ १ ॥

सहस्रपत्राद्भुतहेमपद्म
पद्मासनासीनमदीनमेधम् ।
जगत्त्रयैकप्रभुताप्रभाव-
प्रभाऽभिरामं मुनिराजिराजम् ॥ २ ॥

अनुत्तरब्रह्ममयं निरङ्क-
मृगाङ्कबिम्बोज्ज्वलकायकान्तिम् ।
श्रीवर्द्धमानादिमशिष्यनाथं
श्रीगौतमस्वामिनमानुवामि ॥ ३ ॥
॥ विशेषकम् ॥
निदेशतो वीरजिनेश्वरस्य
दरप्रमश्लोकमितं व्यधाद्यः ।
श्रीसूरिमन्त्रं त्रिजगद्धितैषी
स गौतमो रातु ममेष्टसिद्धिम् ॥ ४ ॥
सरस्वती विश्वहितावधाना
सूरीश्वरध्यानपदप्रभावा ।
सहस्रहस्तप्रथिता त्रिलोक-
स्वामिन्यपि प्रार्थितशस्तदात्री ॥ ५ ॥
श्रीर्देवता विश्वविमोहनी चा-
सुरेन्द्रवर्गस्तवनीयरूपा ।
यक्षाधिपो विंशतिशस्तहस्त-
स्फुरज्जगज्जैत्रपराक्रमश्च ॥ ६ ॥

इन्द्रांश्चतुःषष्टिरभीष्टदाश्च
त्रिलोकरक्षाप्रभवत्प्रभावाः।
यक्षाश्चतुर्विंशतिरार्हतांह्रि-
सेवापवित्रीक्रियमाणगात्राः ॥ ७ ॥
देव्योऽपि दिव्याव्ययशक्तियुक्ता
भक्ता जिनेष्वार्हतभद्रसक्ताः।
उपासते यं गणधारिमन्त्रा-
धिष्ठायिका नित्यमचिन्त्यभक्त्या ॥ ८ ॥
यन्नाममन्त्रोऽपि जयत्यचिन्त्य-
शक्तिर्मरुत्कुम्भमणिद्रुमादीन्।
तं सर्वचिन्तातिगशर्म्महेतुं
श्रीगौतमं नौमि भवाब्धिसेतुम् ॥ ९ ॥
पदं यथाऽब्धिस्तटिनीतटीनां
खं तारकाणां विटपी लतानाम्।
तथा विभो गौतम सर्वलब्धि-
प्रभामहिम्नां भगवंस्त्वमेव ॥ १० ॥

मुक्तिं व्रजंस्त्वं न्यदधाः स्वनाम्नि
　　सश्रीसखीर्नाथ निजानुलब्धीः ।
वसत्यदो यत्र नरे गणेन्द्र
　　वसन्ति यत्ता अपि तत्र सर्वाः ॥ ११ ॥
कान्ताः शिवाप्तौ तव लब्धयस्त्वां
　　दुःखाद् भ्रमन्त्यः किल वीक्ष्यमाणाः ।
नामापि शृण्वन्ति तवेश यत्र
　　सूत्कण्ठयेवानुसरन्ति तं द्राग् ॥ १२ ॥
तवाऽऽतपस्यासमयात्कराब्जे
　　जज्ञे निलीना खलु केवलश्रीः ।
दीक्षामिषाद्यन्न्यदधा यदीय-
　　शिरस्सु तं ते द्रुतमापुरेताम् ॥ १३ ॥
त्वयाऽऽत्मनो वीरजिनाधिपेना-
　　ऽभेदस्तथाध्यायि वशेन भक्तेः ।
अनन्तचिद्दर्शनवीर्यसौख्य-
　　लाभात्तदात्मैव विभो यथाऽभूः ॥ १४ ॥

शिवंश्रियः कोऽपि दृढोऽनुराग-
स्त्वयीश सौभाग्यरमात्मकेऽहो ।
नामापि यत्ते जपतः प्रबुद्धा-
नेषाऽखिलान् प्रापयतेश शर्म ॥ १५ ॥
त्वदीयभक्तेः शिवशर्म्मलक्ष्म्या
मैत्री प्रभो कापि परा नवीना ।
स्वाधारकान् भव्यजनान् गुणाढ्यां-
स्तस्यै पतीन् सा हि ददात्यशेषान् ॥ १६ ॥
न के पदार्था बहवो महान्त-
स्तव प्रभावे तु विचिन्त्यमाने ।
पृथ्वी न पृथ्वी न गिरिर्गरीयान्
नाब्धिर्महीयान्न नभोऽप्यदभ्रम् ॥ १७ ॥
विदन्ति मानं जलधेर्भुवो वा
केचित्कथं चिन्नभसोऽपि विज्ञाः ।
न ते प्रभावे पुनरस्ति मानं
भवन्त्यमाना अपि किं तदाऽर्थाः ॥ १८ ॥

ब्रह्मास्पदं वा कमलापदं वा
वदन्तु पद्मं तव पादयोस्तु ।
अनाप्य माहात्म्यरमां नु तस्यै
निषेवतेऽम्बूनि सदा तपस्वि ॥ १९ ॥

भोभोः श्रिये किं व्यवहारखेदै-
राराधितैः किं बहुमन्त्रतन्त्रैः ।
किं दैवतोपासनकर्मभिश्च
श्रीगौतमं ध्यायत नाथमेकम् ॥ २० ॥

पुरा यथा गौतम तापसादिकान्
मिथ्यामतादुद्धरसि स्फुरत्कृपः ।
तपस्क्रियासंयमयोगदुर्बलं
भवावटान्मामपि तद्वदुद्धर ॥ २१ ॥

भवाब्धिभेम्युत्कटदुःखराशे-
र्धर्तुं द्विधेशो न च योगशुद्धिम् ।
गतिर्न मेऽन्याऽस्ति ततः शिवेच्छो-
स्त्वमेव तद्धेहि कृपां मयीश ॥ २२ ॥

भावद्विषो ये निहतास्त्वयेश
ते व्यन्तरीभूय भवद्रुषेव ।
निरोजसं त्वत्कुलजं समीक्ष्य
मां पीडयन्तीति मुनीन्द्र रक्ष ॥ २३ ॥

गणिवर तव सद्गुणैकलीनं
भवतु मनो मम गौतमाविरामम् ।
विजहतु तदिमे कषायमुख्या
रिपुनिकराश्च मयीति सुप्रसीद ॥ २४ ॥

एवं श्रीगणनाथ गौतमगुरो स्तुत्वा मयाऽभ्यर्थ्यसे
नाम्नाऽहं मुनिसुन्दरो ऽभवमथो कुर्याः प्रसादं तथा ।
त्वां सर्वज्ञ यथार्थतोऽपि विशदज्ञानादिरत्नत्रया-
ल्लब्ध्वा कर्मजयाश्रियं शिवपुरे राज्यं लभे चाचिरात् ॥२५॥

इति युगप्रधानावतारबृहत्तपागच्छाधिराजश्रीदेवसुन्दरसूरि-
श्रीज्ञानसागरसूरिश्रीसोमसुन्दरसूरिशिष्यैः श्रीमुनि-
सुन्दरसूरिभिर्विरचिते जयश्र्यङ्के श्रीजिनस्तोत्र-
रत्नकोशे प्रथमप्रस्तावे श्रीगौतमस्तोत्र-
रत्नमेकविंशम् ।

॥ अर्हम् ॥

जयश्रिया प्राप्तसुखप्रकर्षा
लसन्ति यद्भक्तिभृतः सहर्षाः।
प्रह्लादराजप्रथितप्रतिष्ठं
स्तवीमि तं पार्श्वविभुं गरिष्ठम् ॥ १ ॥
तव स्तुतिं यां विभवो विधातुं
न निर्जराणां प्रभवोऽपि पार्श्व ।
करोति यत्तामपि मादृशोऽत्र
हेतुः प्रसत्तिर्भगवंस्तवैव ॥ २ ॥
प्रह्लादभूपालविहारचूडा-
मणिस्तुतिस्ते क्व जडः क्व हाऽहम् ।
अर्हामि यत्नं तदपीह यत्तां
कृत्वा लभन्ते पशवोऽप्यभीष्टम् ॥ ३ ॥
जनं सुरास्त्रातुमलं न तोषिता
अपि स्तवैर्नाथ भवाद्भवस्थिताः ।
न तोष्यसे त्वं त्वभवोऽप्यरागधी-
स्ततो गतिः का ननु बिभ्युषां भवात् ॥ ४ ॥

"स्तवैर्न तुष्टा अपि पातुमीशते
सुरा भवाद् दुःखमयाद्भवस्थिताः।
न तुष्यसि त्वं त्वभवोऽप्यरागधी-
स्ततो गतिः का ननु बिभ्युषां भवात् ॥५॥"
॥ इति वा पाठः ॥
अरोषतोषोऽप्यथवा त्वमेव मां
कृतार्थयिष्यस्यत एव नूयसे।
अरोषतोषा अपि नार्थितप्रदाः
किमर्थिनां स्युस्त्रिदशद्रुमादयः ॥ ६ ॥
स्तुवन्ति मोहास्तधियोऽत्र के न कान्
जिनेन्द्र देवान् विविधार्त्तिशान्तये।
अयं त्वदुक्ताञ्जनशुद्धतत्त्वदृग्
स्तवीति विश्वार्च्य भवन्तमेव तु ॥ ७॥
यदुग्रपित्ताद्युपदूषितेक्षणा-
स्तृषा प्रधावन्ति मरीचिकाः प्रति।
विशुद्धनेत्रास्तु महाजलाशयान्

प्रतीति भेदो गुणदोषजो ह्यवग् ॥ ८ ॥
अभ्यस्यते यत्सुलभं भवे भवे
भवेत्तदेतत्कथमस्तु वास्तवम् ।
स्तुतिं तवाभ्यस्य न यत् पुनर्बुधाः
सृजन्ति कस्यापि गतास्त्वदात्मताम् ॥९॥
तव स्तुतिर्वन्दनमर्चनादि वा
सुखाय मुक्तेरिति वेद एव नः ।
इयं हि ते मूर्त्तिरपीक्षिता सतां
प्रदर्शयत्येव तदीयवर्णिकाम् ॥ १० ॥
न भास्यते कैर्धरणोरुगाधिराट्
निधिर्महिम्नां स विशुद्धदर्शनः ।
तवोपकारानृणतां प्रयाति य-
स्त्वद्भक्तिविघ्नापहृतीष्टदानतः ॥११॥
पद्मावती स्वं तव पार्श्व भक्त्या
पवित्रयन्ती शिवदायशक्त्या ।
त्वदाश्रितान् शर्म परं नयन्ती

श्लाघ्येत शक्रैरपि युक्तमेतत् ॥१२॥
तवांह्रिसेवां सततं सृजन्त्या
वैरोट्यया शासनपालनेन ।
यदर्ज्यते पुण्यमनेन तस्याः
शिवेन्दिरां वेद्मि करे लुठन्तीम् ॥ १३ ॥
जयत्प्रतीक्ष प्रतिपक्षतां तव
श्रिताः श्रयन्ते प्रतिपक्षतां श्रियाम् ।
अतीतसंसारशमां पदं वशं
पदाम्बुजं ते दधतः स्वमानसे ॥ १४ ॥
अतीतसंसारशमां च शर्म्मणां
पदं पदौ ते दधतः स्वमानसे ॥
॥ इति वोत्तरार्द्धपाठः ॥
मुधैव देवद्रुमरत्नकुम्भाः
कलौ न सन्तीति वदन्ति मुग्धाः ।
तवैव मूर्त्तौ खलु ते निलेल्यु-
स्तदा न कार्यं हि करोति सैव ॥१५॥

मितंपचत्वं किमिदं तव प्रभो
ममाथवा काऽप्यतुलाऽस्त्यनर्हता ।
यदक्षरानन्तसुखश्रियां निधेः
सतोंशमप्यातनुषे न मेऽर्थिनः ॥ १६ ॥

मितंपचत्वं घटते न ते निधिं
तमर्थिनां यद्वितरस्यविश्रमम् ।
अनर्हता मे यदि तत्क्षिपस्व तां
प्रसह्य सद्योऽत्र विभुस्त्वमेव हि ॥ १७ ॥

सपञ्चविंशे जिन योजने शते
गदादिपीडा विनिहंसि योऽङ्गिनाम् ।
स हंसि किं हृद्यपि मे स्थितो न ताः
कुकर्म्मभिश्चेत्क्षिप तानि ताश्च तत् ॥ १८ ॥

त्वयैव धत्ते त्रिजगत् सनाथता-
मनाथयं त्वामहमप्यतोर्त्तिभाग् ।
सुदुर्गदौघो द्विविधस्तथापि चे-
त्तो हताशस्य ममास्तु कोऽविता ॥ १९ ॥

प्रभाववार्द्धौ तव मे मनो झषं
निमग्नमप्याः कुविकल्पजालकैः ।
कदर्थयेत् पार्श्व विमोहधीवर-
स्तदस्मि दुःखी विमनास्ततोऽव माम् ॥२०॥
मया प्रपन्नोऽसि समग्रवाञ्छित-
प्रदस्त्वमेव प्रभुराप्तशेखरः ।
स्वसेवकं चेदुररीकरोषि मां
त्वमप्यवाप्नोमि तुलां तवैव तत् ॥ २१ ॥
त्वदंह्रिभक्तिं भगवन् दधज्जनः
श्रीपार्श्व दुःखैस्त्रिविधैर्विमुच्यते ।
इतीश शास्त्रश्रुतमानुभौतिकं
कुरुष्व मे चेद्दधसे कृपालुताम् ॥ २२ ॥
अशुभायतिकर्मकारिणो
मतिमत्त्वं ह्यविगानमेति नो ।
भवभीतिकरान् परान् स्तुवं-
स्त्वदभक्तिः सदधीश किं सुधीः ॥ २३ ॥

ज्ञानमानधनदानवृद्धयः
कान्तिकीर्त्तिधृतिबुद्धिसिद्धयः ।
सम्भवन्ति भाविनामिह स्तवात्
सर्ववस्तुषु तवैव वास्तवात् ॥ २४ ॥

ततः स्तुतिं श्रीजगदीश पार्श्व
व्यधामिमां मुग्धधियाऽपि तेऽर्हन् ।
समीहितं देह्यनयाऽपि मे द्राग्
कृपा कृपालो विदितेति हि स्यात् ॥ २५ ॥

एवं पार्श्वजिनस्य ये विदधते प्रह्लादनाऽऽह्वे पुरे
श्रीप्रह्लादविहारभूषणमणेः सद्भक्तियुक्ताः स्तुतिम् ।
प्राप्यैते मुनिसुन्दरस्तवमयीं ज्ञानादिऋद्धिं परां
द्वैधद्वेषिजयश्रिया शिवपुरे राज्यश्रियं प्राप्नुयुः॥२६॥

इति युगप्रधानावतारबृहत्तपागच्छाधिराजश्रीदेवसुन्दरसूरि-
श्रीज्ञानसागरसूरिश्रीसोमसुन्दरसूरिशिष्यैः श्रीमुनि-
सुन्दरसूरिभिर्विरचिते जयश्र्यङ्के श्रीजिनस्तोत्र-
रत्नकोशे प्रथमप्रस्तावे प्रह्लादनपुरमण्डनप्रह्लादन-
विहारश्रीपार्श्वजिनस्तवनं द्वाविंशम् ।



॥ अर्हम् ॥

जयश्रिया द्वैधरिपूत्कराणां
जगत्प्रसर्प्पत्प्रभुताप्रतापम् ।
श्रीमद्युगादीशजिनेन्द्रचन्द्रं
स्तवीम्यहं देलउलापुरस्थम् ॥ १ ॥
त्वयि प्रभौ चेतसि संस्थिते स्यु-
र्न रोगशोका दुरुपद्रवाश्च ।
नो भीतयो व्याधय आधयो वा
तनूमतां दुःखकृतः कदाचित् ॥ २ ॥
विचित्रदुष्टज्वरकुष्ठकास-
श्वासाक्षिशीर्षोदरकर्णरोगाः ।
भगन्दराद्याश्च गदाः समग्रा-
स्त्वन्नाममन्त्रात् प्रलयं प्रयान्ति ॥ ३ ॥
ग्रहाः प्रसत्तिं दधते समग्राः
सुराश्च सुर्यश्च वरप्रदाः स्युः ।
वशा नृपाद्याः प्रहताः खलाश्च
श्रीमद्युगादीश तवांह्रिभक्त्या ॥ ४ ॥

भूतप्रेतव्यन्तरक्षेत्रपाला
सीकोतर्यः शाकिनी डाकिनी वा ।
व्यन्तर्याद्या अप्यधीश क्षमन्ते
त्वद्भक्तं नो बाधितुं लेशतोऽपि ॥ ५ ॥

तवांह्रिभक्त्याऽर्थितदारसार-
समृद्धिपुत्राद्भुतराज्यलक्ष्म्यः ।
द्विषज्जयः सन्ततभोगयोगा
जिनेश पुण्यैः सुभगा नृणां स्युः ॥ ६ ॥

निरन्तरारोग्यमहप्रताप-
यशःप्रतिष्ठाप्रभुतोर्जितानि ।
सुदीर्घमायुःसुभगत्वसार-
कला लभन्ते जिनतोंऽह्रिभक्ताः ॥ ७ ॥

इहाप्यभीष्टानि सुखानि भुक्त्वा
युगादिनेतर्भवतोऽर्चनाद्यैः ।
भव्या भवन्ते किल चक्रिशक्रा-
ऽहमिन्द्रदेवाव्ययशर्म्मलक्ष्मीः ॥ ८ ॥

रणे जयं सम्पदमाशु दुस्था,
बद्धा द्रुतं बन्धनमोक्षमीश ।
नृपावरुद्धाश्च नृपावदानं
भक्ता लभन्ते ऋषभप्रभो ते ॥ ९ ॥
द्विधाऽऽमयैर्नाथ कदर्थितस्य मे
द्विधा च दोषैः सकलार्त्तिलोलवः ।
त्वमेव नेता जगतां पिता हिता-
ऽऽवहः शरण्यः शरणं भवाधुना ॥ १० ॥
नवप्रभावेषु सुरान्तरेष्वहो
त्वमेव गर्ज्जस्यतिशीतिभिः कलौ ।
ग्रीष्मे हि शुष्यन्ति जलाशयाः परे
प्रवर्द्धते वारिनिधिस्तु वारिभिः ॥ ११ ॥
जगत्त्रयीरक्षणदक्षिणे प्रभौ
त्वयि प्रपन्ने शरणं शरीरिणाम् ।
यथेह नश्यन्ति भियो द्विषां त्रिधा
परत्र सांसारिकदुःखजास्तथा ॥ १२ ॥

अयं जनः कैरपि कर्म्मभिः कृतैः
पराभिभूतो भवते पदे पदे ।
ततो विपन्नोऽप्यमितार्त्तिभिः प्रभो
प्रमोदते त्वामधिगत्य तापिनाम् ॥ १३ ॥

दुःपक्षदुःखाढ्यगर्त्तपातिनो
देवान्तराद्यात्मकुशावलम्बिनः ।
अयं तवाज्ञापवियष्टिमाश्रितः
स्वमक्षरं श्रीपद एव मन्यते ॥ १४ ॥

विचित्रदुःखानलतापिताः परे
श्रयन्ति का नौपयिकेन तृष्णिकाः ।
अयं तु ते ध्यानसरोऽधिगत्य तान्
समीहिताऽऽप्त्या मुदितोऽनुकम्पताम् ॥१५॥

यथाऽसि देवान्तरदूरितानां
ज्ञानादिकानां शरणं गुणानाम् ।
समग्ररोगादिभयाकुलाना-
मपीश नाभेय तथा त्वमेव ॥ १६ ॥

देवान्तरापास्तनया गुणानां
ज्ञानादिकानां शरणं यथाऽर्हन् ।
समग्ररोगादिविपत्प्लुतानां
त्राता तथैवासि विभुस्त्वमेव ॥ १७ ॥
त्वयि प्रभो देलउलापुरेशे
यथाऽर्चिते द्राक् विपदः क्षयन्ति ।
नानाभवोपार्ज्जितसम्भवानि
तथैव कर्माण्यपि नाभिसूनो ॥ १८ ॥
संवर्मितानां भवदाज्ञया यथा
जगाद्विषो न प्रभवन्त्युपद्रवाः ।
तथा कषायादिभटोत्कटौजसः
शरीरिणां पापमहारयोऽपि च ॥ १९ ॥
किं कामकुम्भैर्मणिभिः सुराणां
मरुद्गवीभिः सुमनोद्रुमैर्वा ।
हृदि स्थितिं देलउलावतंसः
सतां यदि श्रीऋषभो विधत्ते ॥ २० ॥

अनन्तचिद्दर्शनवीर्यशर्म्मणे
जगद्विपद्व्याहननैककर्म्मणे।
युगादिदेवाय हताखिलार्त्तये
नमो नमो देलउलार्च्यमूर्त्तये ॥२१॥
समग्रभक्तेहितशर्म्मदायिने
समग्रभीत्या जगदेकतायिने।
स्थितिप्रदायांह्रिजुषो पुनर्भवे
नमोऽस्तु मे श्रीऋषभाय शम्भवे ॥२२॥
वशीकृतिर्वाञ्छितसर्वसम्पदा-
मुदग्रमुच्चाटनमापदां ततः।
प्रवासदात्री निखिलांहसां द्रुतं
ममास्तु भक्तिर्वृषभप्रभौ परा ॥ २३ ॥
तरीमिवाश्रित्य तरन्ति वारिधि-
र्भवाह्वयं ये नृसुरासुरादयः।
भजेयमाज्ञामृषभप्रभोरिमां
भवन्तु पुण्यानि च मे तदाऽऽस्तये ॥ २४ ॥

बहुविधबहुकर्म्मजैः कुतर्कै-
निर्हतिधियां कति नैव दैवतानि।
निरुपधिसमताविचारिणां तु
त्वमसि विभो ऋषभैक एव देवः ॥ २५ ॥

एवं देलउलापुरे सुविदितं श्रीमद्युगादिप्रभुं
शक्रालीमुनिसुन्दरस्तवगणैर्नूतक्रमं यः स्तुते ।
सर्वाभीष्टसुखोच्चयैरविरतिस्फूर्जत्प्रमोदाढ्यो
मोहद्वेषि जयश्रिया स लभते श्रेयोऽचिराच्छाश्वतम् ॥२६॥

इति युगप्रधानावतारबृहत्तपागच्छाधिराजश्रीदेवसुन्दरसूरि-
श्रीज्ञानसागरसूरिश्रीसोमसुन्दरसूरिशिष्यैः श्रीमुनि-
सुन्दरसूरिभिर्विरचिते जयश्र्यङ्के श्रीजिनस्तोत्र-
रत्नकोशे प्रथमप्रस्तावे देलउलाविभूषणश्री-
ऋषभजिनस्तवनरत्नं त्रयोविंशम् ।
ग्रन्थसंख्या १०६३ ।



॥ अर्हम् ॥

# श्रीगुणविजयगणिविरचित-
# चतुर्विंशतिजिनभवस्तवः ।

नत्वाऽऽदौ विधिवद्गुरोः क्रमकजद्वन्द्वं गरीयः श्रियो-
गेहस्य प्रकटप्रभावकलितस्याधारमूर्त्तेर्मुदा ।
श्रीमन्नाभिनरेन्द्रनन्दनमुखस्याद्यादिनामादरा-
द्दिग्मातङ्गजगन्निशाकरमितान् वक्ष्ये भवान् भक्तितः॥१॥
पूर्वं यो धनसार्थराट् युगलिकः सौधर्मवृन्दारको
विद्याभृच्च महाबलो नरपतिः कल्पे द्वितीये मरुत् ।
भूपालो युगलीसुरः प्रथमके कल्पे भिषक् द्वादशे
देवश्चक्रधरः समग्रविबुधोत्तंसो वृषाङ्कः श्रिये ॥ २ ॥
जम्बूद्वीपविदेहवच्छविजयाभूभामिनीभूषणं
भूपश्रीविमलादिवाहन इति प्रौढप्रतिष्ठाऽऽस्पदम् ।
गीर्वाणो विजयाभिधानविपुलस्फूर्ज्जद्विमानेऽभवत्
भूयाद्भूरि विभूतयेऽजितजिनः सोऽयं सतामन्वहम् ॥३॥

विश्वेशो विपुलाद्बलो बलवतामाद्योऽनवद्यो भुवि
प्रख्यातः प्रथितोदयः सुरवरो ग्रैवेयके सप्तमे ।
श्रीसेनाङ्गभवो भवोद्भवमहाकष्टैकविध्वंसको
जीयाज्जन्मजरादिदुःखरहितो भास्वद्यशा जन्मिनाम् ॥४॥
रत्नं रत्नपुरेश उज्वलतरश्रेयःश्रियामाश्रयो
विश्वव्यापिमहामहाबलनृपो वर्यावदातो महान् ।
लब्धाऽनेकजयो जयन्तविबुधः श्रीसंवरक्ष्मापतेः
सूनुः श्रीअभिनन्दनो मतिमतामानन्दतात् मानसम् ॥५॥
उर्वीशोऽतिबलो विदेहवसुधासारङ्गसीमन्तिनी-
सारङ्गः सकलार्थसिद्धिकलितो लीलाविलासालयः ।
आराध्य व्रतमद्भुतं च दिविषज्जातो जयन्ते श्रियं
चेषद्धाङ्गितातिप्रदत्तसुमतिः श्रीमङ्गलानन्दनः ॥ ६ ॥
यो नीरेश्वरमेखलाप्रियतमो गाम्भीर्यनीरेश्वर-
स्तेजस्विन्नपराजितेत्यभिधया धीधाम धामोल्वणः ।
शान्ताह्वानरसं विभाव्य नवमे ग्रैवेयके निर्जरः
सञ्जातो जयताज्जयर्द्धिनिवहः श्रीसुप्रभः केवली ॥७॥

श्रीनन्दिर्वसुधाधवो नयनिधिर्मुख्येभवेऽत्यद्भुतः
षष्ठे श्रेष्ठमतिः परर्द्धिविजुषि ग्रैवेयको दैवतः ।
संसाराम्बुनिधौ पतन्तममिते स्वं किंकरं तीर्थराट्
पायात्पावनकीर्त्तिकान्तिनिचितः स श्रीसुपार्श्वप्रभुः ॥८॥

श्रीवर्मक्षितिपोऽथ निर्जरवरः सौधर्मवासी ततः
सञ्जज्ञे जितसेननामनिपुणः श्रीसार्वभौमोत्तमः ।
देवेन्द्रो ऽच्युतगश्च पद्मनृपतिः श्रीवैजयन्ते मरुत्
चन्द्राङ्कः कुरुतात् शिवानि शिवकृत् स प्रीतिमान् प्राणिनाम्॥

श्रीमत्पुष्करपुण्यभूमिषु महापद्माभिधक्ष्माधवः
स्वं राज्यं चिरकालमुज्वलयशा यो पालयद्धीधनः ।
गीर्वाणस्त्रिदिवेऽजनिष्ट दशमे निर्वाणशर्मस्पृहः
सुग्रीवाक्षितिपात्मभूर्भवाभिदे श्रीपुष्पदन्तो जिनः ॥१०॥

विद्वद्वर्ण्यविदेहवच्छविजयाविश्वम्भराविश्रुतः
पद्माक्षः क्षितिपालमौलिमुकुटः श्रीपद्मपृथ्वीपतिः ।
श्रीमत्प्राणतवासिनाकिनिकरालङ्कारचूडामणि-
र्लेखोऽथ प्रभुशीतलः प्रथयतात् सिद्धिं सुवर्णप्रभः॥११॥

आसीन्न्यायशुभानगर्याधिपतिर्दासीकृतारिव्रजो
नीतिज्ञो नलिनादिगुल्मनृपतिश्चञ्चन्मतिः सद्गतिः ।
आदाय व्रतमच्युतेऽमृतभुजां मुख्यो गुरुः श्रेयसे
श्रीश्रेयांसजिनादितेयरमणः स्वर्धेनुतुल्यः सताम् ॥१२॥
पद्माभक्रमपाणिरिन्दुवदनः पद्मोत्तरक्ष्मापतिः
पुंरत्नं विमलादिबोधसचिवः प्रोद्दामधामा स्फुटम् ।
कल्पे प्राणतनाम्नि चारुधिषणो देवाधिराजस्ततो
देयाद्वासवपूज्यपादकमलः श्रीवासुपूज्यः शिवम् ॥१३॥
भूभूषासुमहापुरीनरपतिः श्रीपद्मसेनाभिधो
निःशेषावनिपालपालितयशाः सामन्तवन्द्यक्रमः ।
लात्वा दैक्ष्यमवातरद्दमयुतो देवः सहस्रारके
श्यामायास्तनुजस्तनोतु नियतं सौख्यानि भव्याङ्गिनाम्॥
राजा पद्मरथः स्वकीयधिषणागीर्वाणभट्टारकः
संजातः सकलार्थसाधनपटुर्व्यावर्ण्यमुख्ये भवे ।
देवः प्राणतकल्पगः सुरवधूनेत्रात्रिभागातिथि-
र्दिश्याद्वः कुशलं सुकृत्यकुशलः श्रीमाननन्तोऽन्वहम् ॥१५॥

भूभर्त्ता भरतावनौ दृढरथः श्रीभाद्दिलाधीश्वरो
दुर्नीतिस्थितिभिज्जयी च विजये स्वाहाऽशनः सुन्दरः ।
स्तादस्ताघभवाब्धितारणविधौ सत्कर्णधारः प्रभु-
र्मच्चेतोजलबालकाचलविलासी धर्मदन्तावलः ॥ १६ ॥
श्रीषेणाभिधभूपतिर्मिथुनिकः सौधर्म्मकल्पे मरुत्
खेटेशोऽमिततेज इन्दुविमलः श्रीप्राणते निर्जरः ।
सीरी द्वादशकल्पदैवतपतिर्वज्रायुधश्चक्रभृत्
ग्रैवेये त्रिदशो नृपश्च विबुधः शान्त्यै स शान्तिर्जिनः॥१७॥
सिंहो द्विस्ततिकुम्भिकुम्भदलने सिंहावहः काश्यपी
कान्तः कान्तगुणौघरत्नजलधिः सर्वार्थसिद्धौ सुरः ।
श्रीसूरक्षितिपालवंशतिलकः श्रेयोऽम्बुजाहर्मणिः
मच्चेतः सदने विशल्वविरतं श्रीकुन्थुतीर्थाधिपः ॥१८॥
लब्धश्लोकधनो नृपो धनपतिर्विद्वेषिदन्तिव्रजे
बिभ्राणः स्फुटपाटवं पटुगतिर्मातङ्गविद्वेषिणः ।
धर्माराधनतत्परः श्रुतिमतिः सर्वार्थसिद्धौ मरुत्
यो जातः शिवतातिरस्तु भविनः स्याद्वादिसौदर्शनः॥१९॥

षण्मात्रेर्मुदितो महाबल इति क्षोणीरमामाधवः
क्षोणीशस्त्रिदशाधिराजसदृशः श्रीयुक् जयन्ते सुरः।
कर्मौघद्रुमहस्तिमल्लकरणिः श्रीमल्लिरिष्टाप्तये
सेव्यः सज्जनचारुचित्तजलधौ स्पष्टं मृगाङ्कोपमः॥२०॥
भूपालः शिवकेतुकः सुरवरः कल्पेऽथ सौधर्मके
च्युत्वाऽभूच्च कुबेरदत्त उदितस्तुर्ये सुपर्वाऽग्रणीः।
पश्चाद्भूपतिवज्रकुण्डल इति श्रीब्रह्मकल्पे मरुत्
वर्माह्वक्षितिपः सुधाऽशनवरः श्रीसुव्रतः पातु वः॥२१॥
कौशाम्बीललनाऽऽस्यमण्डनमलं कारुण्यपाथोनिधिः
सिद्धार्थक्षितिभुक् सुपर्वमुकुटः श्रीप्राणते प्रीतिभाक्।
वप्राकुक्षिसरोमरालविलसल्लीलायितं योऽधर-
ज्जूत्यै वो भगवाननङ्गरहितः श्रीतीर्थनाथो नमिः॥२२॥
जम्बूद्वीपगते पुरेऽचलपुरे श्रीमद्धनक्षोणिराट्
सौधर्मे त्रिदशोऽथ चित्रगतिकः खेटश्चतुर्थे मरुत्।
भूनेतारणनिर्जरो नरवरः शङ्खश्च लेखस्ततः
प्रालेयाचलचन्द्रनिर्मलयशा नेमिर्मनोमोदकृत्॥२३॥

भूदेवो मरुभूतिकश्च करटी देवोऽष्टमे खेचरो
मर्त्त्यः क्षोणिपतिः सुरः समजनि श्रीसार्वभौमे महान् ।
अस्वप्नस्त्रिदिवे बभूव दशमे प्रोद्यत्प्रभापेशलः
श्रीपार्श्वो भुजगेन्द्रचर्चितपदः पुण्यानि पुष्णातु वः॥२४॥
ग्रामस्वाम्यमरो मरीचिरमृताहारः परिव्राजकः
षोढा चामृतभुक् भवोऽतिबहुलः श्रीविश्वभूतिर्मरुत् ।
विष्णुर्नैरयिको हरिश्च नरके भ्रान्तिर्भवान्तर्बहु-
श्चक्री नाकिवरोऽथ नन्दननृपः स्वर्गेऽवतात् त्रैशलः॥२५॥
इत्थं श्रीवृषभाङ्कचन्द्रजिनपश्रीशान्तिकूर्मध्वज-
श्रीकम्बुध्वजपार्श्ववीरविजयाजातप्रभृत्यर्हताम् ।
विश्वक्ष्मामुनिभानुनन्दनिधिदिक्द्वीपाक्षधूमध्वजाः
प्रौढप्रीतिमतां भवन्तु भवतां प्रोक्ता भवाः सिद्धये ॥२६॥
वर्षे व्योममतङ्गजर्तुकुमिते राजादनीबान्दिरे
नाभेयादिजिना इति स्तुतिपथं नीताश्चतुर्विंशतिः ।
प्राग्भारेण मुदो गुणादिविजये प्रोद्भूतसद्भावतो
देयासुर्विविधश्रियः सुभगतामानन्दकन्दाम्बुदाः ॥२७॥

इति श्री२४जिनभव१३८स्तवः ।

॥ अर्हम् ॥

# श्रीमहावीरजिनस्तवः ।

चन्द्रादित्यमरालदन्तिपवनैः सिंहक्षमाभृद्घनैः
वीणाकम्बुरमासमुद्भवरसाकर्पूरशर्वोदकैः ।
लक्ष्मीकान्तकुठारखड्गकुसुमैर्दीपापगाकार्मुकै-
र्निर्ग्रन्थालिपयोरुहागुरुपिकैर्वह्न्यश्वकार्त्तस्वरैः ॥ १ ॥

रमणचित्रकलोचनकज्जलै-
र्वदनचित्रभुजङ्गमचन्दनैः ।
कुलसुवासमहोदधिनन्दनी-
प्रमदसप्रमदैर्वनिविश्रुतैः ॥ २ ॥

श्यामाभेकरथाङ्गरत्नगरुडैः कीरप्लवङ्गोज्ज्वल-
प्रेङ्खद्वर्णनभोऽम्बुपैः सुफलवद्वाक्सारिकाखञ्जनैः ।
वेणीरागकुरङ्गकुर्कुटलसद्दंशस्फुरद्वाहनै-
रथैर्वीरविभुं नभोरस६०मितैः सारङ्गजैः संस्तुवे ॥ ३ ॥

भविककुमुदबोधनसारङ्गं
कोविदकोकनयनसारङ्गम् ।

सुकृतसरोवरतटसारङ्गं
दुष्कृततरुभञ्जनसारङ्गम् ॥ ४ ॥
कुनयरजोहरणे सारङ्ग
कितवकरटिदारणसारङ्गम् ।
निश्चलतानिर्जितसारङ्गं
कुगतिदहनतर्जनसारङ्गम् ॥ ५ ॥
सुस्वरतातर्जितसारङ्गं
चारुनिरञ्जनतासारङ्गम् ।
सुन्दररूपविजितसारङ्गं
सर्वसहनगुणतासारङ्गम् ॥ ६ ॥
श्वासपराजितवरसारङ्गं
दुर्मदाविधिवदने सारङ्गम् ।
दुरितमलापनयनसारङ्गं
मन्मथभस्मकरणसारङ्गम् ॥ ७ ॥
कुमतिलतालवने सारङ्गं
करपङ्कजसमतासारङ्गम् ।

समवसरणसञ्चितसारङ्गं
त्रिभुवनभवनसुभगसारङ्गम् ॥ ८ ॥
निर्मलतागङ्गासारङ्गं
भ्रूमञ्जुलताजितसारङ्गम् ।
शमरसरत्नाकरसारङ्गं
सज्जनमनपङ्कजसारङ्गम् ॥ ९ ॥
अद्भुतपरिमलसुखसारङ्गं
देवसमुद्गाहितसारङ्गम् ।
कण्ठचमत्कृतकलसारङ्गं
दुर्नयविततगहनसारङ्गम् ॥ १० ॥
दमितकरणचञ्चलसारङ्गं
मुक्तरजतमणिगणसारङ्गम् ।
निर्वृतिमृगनयनासारङ्गं
कुमतकुरङ्गहननसारङ्गम् ॥ ११ ॥
त्रिभुवनवर्त्तिसुजनसारङ्गं
सिद्धिवधूलोचनसारङ्गम् ।

शशिसोदरसुन्दरसारङ्गं
सौवरमादर्शितसारङ्गम् ॥ १२ ॥
कीलितकोपविषमसारङ्गं
वाणीशीतलतासारङ्गम् ।
पावितनिजनिरुपमसारङ्गं
मृगमदजैत्रवदनसारङ्गम् ॥ १३ ॥
निजवशनिर्मितमतिसारङ्गं
सुरपतिभिर्विनुतं सारङ्गम् ।
विदलितमोहविपुलसारङ्गं
देवीकृतवापीसारङ्गम् ॥ १४ ॥
गगनचलितगुरुवृषसारङ्गं
ज्ञातकुले निर्जरसारङ्गम् ।
रोषभुजङ्गदमनसारङ्गं
ज्ञानमहाभूरुहसारङ्गम् ॥ १५ ॥
स्वीयवशीकृतमनसारङ्गं
लेश्यागुणगालितसारङ्गम् ।

दानावर्जितभविसारङ्गं
निगदितनियतनिपुणसारङ्गम् ॥ १६ ॥
केलिकृते रक्षितसारङ्गं
जनरञ्जनलोचनसारङ्गम् ।
लुञ्चितभुजगसदृशसारङ्गं
धर्मकथालापितसारङ्गम् ॥ १७ ॥
अङ्गरजोमृगमदसारङ्गं
मोहरजनिबोधनसारङ्गम् ।
स्वरमाधुर्यमथितसारङ्गं
वीरं भजत सुकृतसारङ्गम् ॥ १८ ॥

इत्थं वीरजिनः स्तुतो नवनवैः सारङ्गशब्दोद्भवैः
सद्भावैः सनयं गुणादिविजयेनानन्दरोमोद्गमम् ।
हर्षोत्कर्षवशेन पेशलतरैर्भावैः सुरैः संनत-
श्चित्तप्रीतिकरं परं पदमयं दद्यान् मुदा देहिनाम् ॥१९॥

इति श्रीमहावीरजिनस्तवः ।

॥ अर्हम् ॥

# श्रीद्वीपबन्दिरनवमजिनस्तवनम् ।

नवमश्रमणपवरममरव्रज-

परमशमक्षमसकलवदनकज ।

गतमलममदमसमजनगतमन

भज नरभवभयहरणमचलधन ॥ १ ॥

ध्वस्तक्षय मदमदनशमरकर

कमलदलप्रभनयनयमलधर ।

चरणकरणकलवरतरसदन

भव मकरध्वजपरपददद्दन ॥ २ ॥

मकरध्वजतवपदयममघहर-

मस्तश्रम हस्तद्वयमजकर ।

अक्षरपदप्रद हतमद गतभव

नवलक्षप्रकटप्रवरस्तव ॥ ३ ॥

मतमतमकरध्वजसरलच्छल

गजशरवक्रक्षतमनभवदल ।

घनकश्मलजलधरशम मम भव-

मप्रभहर जनवत्सल घनरव ॥ ४ ॥

"मप्रभदमय सबलकलघनरव ॥" पाठान्तरम् ॥

अमरैक्रमणपशमवनजलधर
रजतप्रद बलवत्तरमद्दधर ।
त्यक्तकलत्रतनयधनभवन
रचय शमव्यय मन्मथमथन ॥ ५ ॥
गतभवकपट मदनजलधरजल
पवनसमघमपहर मम घनबल ।
अकलजननमरणस्मय मदगद-
पन्नग हलधरसहजचटनपद ॥ ६ ॥
सच्चरणद्वयजलचरमकर
प्रमददलक्षणसत्वरहतदर ।
भव्यशरण रक्षक रतदमन
जय जय मनरममदगलगमन ॥ ७ ॥
इत्थं गुणेनातिमुदा बुधाना-
मेकस्वराच्चित्रकरस्तवोऽयम् ।
श्रीपुष्पदन्ताख्यजिनेश्वरस्य
दृब्धो भवत्वङ्गभृतां शिवाय ॥ ८ ॥

इति श्रीद्वीपबन्दिरनवमजिनस्तवनम् ।

॥ अर्हम् ॥

श्रीयशोविजयबनारिसजैनपाठशालोत्पादक-

# श्रीमद्धर्मविजयविरचितं

# प्रथमं श्रीपार्श्वनाथाष्टकम् ।

विभोऽङ्गिनां सौख्यततिं मतिं गतिं
  शुभां प्रशस्तां सुमनोहरां त्वरम् ।
तनोषि भो लासि ददासि सर्वदा
  मयाऽपराधस्तव कीदृशः कृतः ॥ १ ॥

प्रभो मया भावविमुक्तशालिना
  कृतं न कार्यं शुभभावसंयुतम् ।
समस्तसाध्वादिसुसाध्यसाध्यके
  भवे भवेयं सुखभाक् कदापि न ॥ २ ॥

कृपा कृपानाथ सदा विलोक्यते
  कृतापराधेन जनेन नित्यशः ।
कृपाकृपाणः खलु यस्य सङ्गतः
  कृतं हि तेनांहसनाशनं मुदा ॥ ३ ॥

दयां दयाधीश विधाय सत्वरं
भवोदधेस्तारय मां हि सागसम् ।
महाऽपराधेषु नतौ सुवत्सलाः
भवन्ति तत्त्वेषु सुतत्त्वदृष्टयः ॥ ४ ॥
भगोस्तव ध्यानपरम्परा वरा
कृताऽमराद्यैः शुभभावभावितैः ।
उपासना पापविनाशकारिणी
प्रसिद्धसिद्धान्तजलौकसारिणी ॥ ५ ॥
अनाथके नाथ तथा प्रसाद्यतां
प्रयान्ति कामाद्यरयो दरिद्रताम् ।
मयूरयुक्ते गहने वनेऽप्यहो
न नागकानां भ्रमणं विभाव्यते ॥ ६ ॥
अहो अहो मोहविचेष्टितं महत्
ममास्ति गाढं भगवन् हि दुर्मदम् ।
विदह्यते सर्वसुकर्मसञ्चितं
स्वसेवकं रक्ष सुपार्श्वपार्श्वक ॥ ७ ॥

अपारसंसारसमुद्रयानके
जिने सदा भक्तिरतिं तनोतु भोः ।
सुबुद्धिधर्मः शुभभावनाभवः
करोतु कल्याणपरम्परां शुभाम् ॥ ८ ॥

इति श्रीपार्श्वनाथाष्टकं प्रथमम् ।

---

॥ अर्हम् ॥

## द्वितीयं श्रीशङ्खेश्वरपार्श्वनाथाष्टकम् ।

श्रेयःपतिं श्रीनरदेवपारगं
सदा सदाचारविचारपारगम् ।
भक्त्या जनानां सुखदानतत्परं
नमामि शङ्खेश्वरधामसंस्थितम् ॥ १ ॥
कृतोपसर्ग्गं कमठेन कर्मठं
तथापि निश्चिन्तनिबाधमानसम् ।
विधूतदुःखं शमतासरोवरं
नमामि शङ्खेश्वरधामसंस्थितम् ॥ २ ॥

भवाटवीं बम्भ्रमता मया नुतं
भवाब्धिपोतं सुविशाललोचनम् ।
सदा प्रसन्नं सुखशान्तिकारकं
नमामि शङ्खेश्वरधामसंस्थितम् ॥ ३ ॥
अगाधसिद्धान्तपयोधिशेवधिं
अनाथनाथं सततं सुबोधिदम् ।
कृतापराधेषु जनेषु शान्तिदं
नमामि शङ्खेश्वरधामसंस्थितम् ॥ ४ ॥
कषायवर्गे निकषायचित्तकं
सुसाधुसङ्घे विकथादिवारकम् ।
अज्ञानमूढे सुकृतादिदेशकं
नमामि शङ्खेश्वरधामसंस्थितम् ॥ ५ ॥
कषायदावानलदाहनीरदं
कुसङ्गसङ्गादिविषाहिमन्त्रदम् ।
अनादिसंसारविकारजायुदं
नमामि शङ्खेश्वरधामसंस्थितम् ॥ ६ ॥

सदागमादेर्नितरां प्ररूपकं
कुवासनादेः प्रबलं विडम्बकम् ।
अनेकविघ्नालिविपत्तिनाशकं
नमामि शङ्खेश्वरधामसंस्थितम् ॥ ७ ॥
यस्य प्रसादेन जगज्जनाना-
मनादिजन्यं क्षयमेति पापम् ।
तं देववन्द्यं सुरराजसेव्यं
नमामि शक्त्या प्रभुपार्श्वदेवम ॥ ८ ॥

इति श्रीयशोविजयबनारसजैनपाठशालोत्पादकशान्तिसागरा नगारगणाग्रणीश्रीमद्धर्मविजयविरचितं द्वितीय श्रीशङ्खेश्वरपार्श्वनाथाष्टकम् ।

## इति जैनस्तोत्रसंग्रहस्य द्वितीयो भागः ।

